श्री सीतारामाभ्यांनमः ।

॥ अथ ॥

# ॥ वशिष्ठस्मृतिः २ ॥

## अथ प्रथमोऽध्यायः

### वर्णाश्रमाणां नित्यनैमित्तिककर्मवर्णनम्

गुरुमिक्ष्वाकुवंशस्य वशिष्ठं ब्रह्मसंभवम् ।
पप्रच्छुर्मुनयः सर्वे पाराशर्यपुरोगमाः ॥ १ ॥

मुनय ऊचुः ।

भगवन्भवता प्रोक्ता यज्ञदानव्रतादयः ।
वर्णाश्रमाणां कर्तव्या नित्यानैमित्तकाः क्रियाः ॥ २ ॥

क आचारः कः आहारः कीदृग्वृत्तिःक आश्रयः ।
वैष्णवानां मुनिश्रेष्ठ ब्रूहि सर्वमशेषतः ॥ ३ ॥

वशिष्ठ उवाच ।

शृणुध्वं मुनयः सर्वे सर्वधर्मसनातनम् ।
वैष्णवानाञ्च विप्राणां यद्यदाचरणं शुभम् ॥ ४ ॥

सर्गादौ ब्राह्मणाः श्रेष्ठाः वैष्णवांशेन चोदिताः ।
इतरे च त्रयो वर्णाः ब्रह्मणा विष्णुसूनुना ॥ ५ ॥

तस्माद्व वैष्णवा विप्रा ब्रह्मादिषु सत्तमा ।
अवैष्णवत्व विप्राणा महापातकमम्मितम् ॥ ६ ॥
अवैष्णवस्तु यो विप्र सर्वकर्मसु गर्हित ।
रौरव नरक प्राप्य चाण्माली योनिमाप्नुयात ॥ ७ ॥
नित्य (त्य) नैमित्तिक काम्य त्रिविध श्रुति चोदितम् ।
अवैष्णवाना विप्राणा कर्म सर्वनिष्फल भवत ॥ ८ ॥
श्रीमहाविष्णुमन्यैरन्य हीनदेवन दुर्मति ।
साधारण मन्नन्त्वते मान्यचौनान्त्सनोऽन्यन ॥ ९ ॥
या विष्णुममानमन्यशप प्रपद्यते ।
स चाण्माले महापापी रौरव नरक व्रजेत् ॥१०॥
अवैष्णवस्व विप्राणामा मनाशनस्मरणम् ।
तस्मात् वैष्णवत्व वै विप्राणा श्रुतिचोदितम् ॥११॥
अवैष्णवाहिपा (हतो) विप्रो हत श्राद्धमदक्षिण ।
अव्रह्मण्य हत क्षात्रमनाचार हत कुलम् ॥१२॥
येवासुदेव नाचन्तिसर्वलोकेश्वरहरिम् ।
तेपा हि नरक वास कल्पायुतशतैरपि ॥१३॥
चतुर्वेदी च या विप्रो वासुदेव न विन्दति ।
वदभारभराक्रान्त स वै ब्राह्मणगर्दभ ॥१४॥
तस्मादवैष्णवत्वेन ब्राह्मादि ( ब्राह्मणत्व ) विहन्यते ।
वैष्णवत्वेन ससिद्धि लभते नात्र सशय ॥१५॥
नारायण परब्रह्म ब्राह्मणाना हि दैवतम् ।
सोमसूर्य्यादयोदेवा क्षत्रियाणा विशा(तथा)पति ॥१६॥

शूद्रादीनां तु रुद्राद्या अर्चनीयाः प्रकीर्त्तिताः।
यत्तु रुद्रार्चनं प्रोक्तं पुराणेषु स्मृतिष्वपि ॥१७॥
तदब्रह्मण्यविषयमेवमाहप्रजापतिः ।
रुद्रार्चनं त्रिपुंड्रं च यत्पुराणेषु गीयते।
क्षत्रविट्शूद्रजातीनां नेतरेषां तदुच्यते ॥१८॥
तस्मात्त्रिपुड्रं विप्राणां (विप्रैस्तु) न धार्य्यं मुनिसत्तमाः।
यदाज्ञानाच्च विभ्रियुः पतितास्तेन संशयः ॥१९॥
ऊद्र्ध्वपुंड्रं तु विप्राणां सततं श्रुतिचोदितम्।
उद्र्ध्वं पुंड्रो मृदा शुभ्रो ललाटे यस्य दृश्यते ॥२०॥
सर्वपापविशुद्धात्मा स याति हरिमन्दिरे ।
स्नानं दानं तपो होम स्वाध्यायः पितृतर्पणम् ॥
भस्मी भवन्तु (न्ति) तत्सर्वमुद्र्ध्वपुंड्रं विनाकृतम् ॥२१॥
मुमुक्षुभिर्वीतरागैरप्रमत्तैः समाहितैः ।
उद्र्ध्वपुंड्रं हरेः पूजाक्ष (छत्रा) वं र(सम) लंकृतम् ॥२२॥
ब्राह्मणैनैव मृद्धार्य्या न भस्म न च चन्दनं।
यद्यबुध्या तु विभृयात्प्रायश्चित्ती भवेत्तु सः ॥२३॥
न त्रिपुंड्रं द्विजैर्धार्यो न पट्टाकारमेव च।
न चान्यदेवता भक्तिराद्यापि (रापद्यपि) कदाचन ॥२४॥
यस्तु नारायणादन्यं स्वतंत्रेण प्रपूजयेत्।
भवेयुर्निष्फलास्तस्य यज्ञदानादिसत्क्रियाः ॥२५॥
अङ्गभावेन देवानामर्चनं न निषिध्यते।
स्वतंत्र वुद्ध्या यः कुर्य्यात् ब्राह्मणो नरकं व्रजेत् ॥२६॥

तस्मात् ब्राह्मणो नित्यं प्रयत्नेनार्चयेद्धरिं ।
तदाधारणभावेन देवता परितोऽर्चयेत् ॥२७॥
अवैष्णवस्तु यो विप्रश्चाण्डालादधम स्मृत ।
न तेन सह भोक्तव्यमापापि (मापद्यपि) कदाचन ॥२८॥
सुदर्शनोर्द्ध्वपुण्ड्राणां धारण प्रथम स्मृतम् ।
तन्मन्त्राध्ययन चैव तदीयाराधनन्तथा ॥२९॥
नित्यमाराधन विष्णोर्ध्यान होमो जपस्तथा ।
तत्कथाश्रवण चैव तन्नामस्मरणैव कीर्तनम् ॥३०॥
तत्पादतीर्थसेवा च तन्निवेदितभोजनम् ।
प्रणामस्तस्यपुरतो नर्त्तनं गीतवादनम् ॥३१॥
तत्स्तोत्रपठन चैव तदन्येषामसेव्यता ।
एव सपूजयन्नित्य नारायणमनामयम् ॥३२॥
स वैष्णवो भवेद्विप्रस्सर्वलोकेषुपूजित ।
ललाटे चोर्द्ध्वं पुण्ड्र तु बाहुमूले सुदर्शनम् ॥३३॥
कंठे पद्माक्षमाला तु पवित्रं दक्षिणे करे ।
वैष्णवस्य (वैष्णवेन) सदा धार्यां हरिसंबन्धवेदनात ॥३४॥
शखचक्राक न कुर्यादात्मनो बाहुमूलयो ।
कलत्रायत्र (पत्न) भृत्येषु पश्वादिषु विमुक्तये ॥३५॥
स पुत्र पशुदाराणां ब्राह्मणाना विशेषत ।
कुर्यात् चिन्तनंचैव वैष्णव नाम लक्ष्म च ॥३६॥
शंखचक्रे सुदर्श कुर्यात्प्रतप्ते बाहुमूलयो
सर्वाश्रमेषु वसतां स्त्रीणां च श्रुतिवेदनात् ॥३७॥

होमानि नैव संतप्तचक्रमादाय वैष्णवम् ।
दक्षिणे बाहु मूले तु दग्ध्वा कर्म समाचरेत् ॥३८॥
विधिनाधायित्वव (धारयित्वैव) पवित्रंचक्रमुत्तमम् ।
ततस्सवैष्णवं याति नान्यथा द्विजसत्तमाः ॥३९॥
तस्मात्तु विधिवच्चक्रं धारयित्वा सुदर्शनम् ।
पश्चात्सर्वाणि कर्माणि कुर्वीत द्विजसत्तमाः ॥४०॥
चक्रस्य धारणे काले ब्राह्मणना (त्वं) विदुर्बुधाः ।
जातिकर्माणि वै कुर्य्याच्चौलोपनयनेपि वा ॥४१॥
मंत्राध्ययनकाले वा चक्रं धार्य्यं विधानतः ।
अधृत्वा विधिवच्चक्रं यद्धि कर्म समाचरेत् ॥४२॥
निष्फलं तु भवेत्सर्वमिष्टा पूर्त्ति (र्त्तिं) द्विजोत्तमाः ।
श्रीवशिष्टस्मृतौ ब्राह्मणस्वरूप कथनं नाम प्रथमोऽध्यायः ।

---

## अथ द्वितीयोऽध्यायः

### अथ वैष्णवानां नामकरण संस्कारवर्णनम्

भगवन् ब्रूहि विप्राणां जाति कर्मादि सत्क्रिया ।
नित्यनैमित्तिकं कर्म विष्णुपूजाविधेः परं ॥ १ ॥
आचक्ष्व विस्वेरेण ( विस्तेरणैव ) सर्वकर्मसशेपतः ।
वक्ष्यामि जातिकर्मादि सर्वानेव विधानतः ॥ २ ॥

जाते पुत्रे पिता स्नात्वा पुत्रं तेन ( दश ) दिनान्तरम् ।
मुच्यते पैतृकात्तस्मात् मत्र गर द्विजोत्तमा ॥ ३ ॥
तत्रदान प्रकुर्वीत यथाशान्त्यनुसारत ।
पश्चादगेउद्वि समाप्ते मगञ्स्नानमाचरेत् ॥ ४ ॥
तत्र मूतकनिमुक्त्यर्थं स्वस्तिवाचनमाचरेत् ।
वैष्णवैश्चाश्रगै मार्द्ध मर्चयेत्पुरुषोत्तमम् ॥ ५ ॥
स पुण्यमण्डपे रम्ये विमानत्वनशोभिते ।
अर्चयेद्गन्धपुष्पाद्यैर्धूपदीपनिवर्दिनि ॥ ६ ॥
आराधन भगवत कुर्यादक्षस्य परमात्मन ।
नाम्ना नारायणस्य मैहनयंण वैष्णवे ॥ ७ ॥
पञ्चाङ्गैश्च समायुक्त पञ्चरससमन्वितम् ।
मन्त्र प्रणवमयुक्तमेन ( तच्च ) चक्रमिहोच्यते ॥ ८ ॥
षडुभिस्तु धर्नर्युक्त सूक्ष्मन्त्रेण सयुतम् ।
मध्ये तद्वानमथत्त शम्य कुर्याद्विचक्षण ॥
स्नान पचामृतै शुद्धैरर्चयेत्सुमना हरे ॥ ९ ॥
ध्यात्वा सुदर्शन तस्मिन् सहस्रार महोत्तमम् ।
कान्तिसूर्यसमप्रख्य तेनमासुननत्रयम् ॥१०॥
पूजयन्त सहस्रार सर्वमन्त्रसमन्वितम् ।
ध्यात्वा न्वियमहस्रार पूजयेत्पुरतो हरे ॥११॥
षडक्षरेण मन्त्रेण पूजयित्वा विधानत ।
जप कुर्यात्तत पश्चादृशमाहस्रसङ्ख्यया ॥१२॥

षट्सहस्रं जपित्वा वा पश्चाद्धोमं समाचरेत् ।
इषुमात्रे चतुर्दिक्षु गोमयेनापि वारिणा ॥१३॥
उपलिप्तं ( शुचौदेशे ) स्थंडिलं तु सु शोभनम् ।
तस्मिनुल्लिख्य उल्लेखं समिधावग्निजातयः ॥१४॥
तन्मध्येऽग्निं प्रतिष्ठाप्य स्वगत्योक्ता (श्रुतिस्मृति) विधानतः ।
आज्यसंस्कारपूर्वेणरध्यायामे समाचरेत् ॥१५॥
आधारावाज्यभागौच हुत्वा हेमं (होमं) समाद्विजः ॥१६॥
पश्चात्तु वैष्णवैसूक्तैर्विष्णु ( मन्त्र ) प्रकाशकैः ।
पवित्रं तु इति द्वाभ्यां ऋग्भ्यां होमं समाचरेत् ॥१७॥
विष्णोरराटमसीति येनदेवा इति त्रिभिः ।
एवमाज्येन होतव्यं मंत्रैःप्रणवपूर्वकैः ॥१८॥
पश्चात्सुदर्शनं तस्मिन् शंखं चाग्रे विनिक्षिपेत् ।
षडक्षरेण होतव्यमष्टाविंशतिसंख्यया ॥१९॥
दक्षिणं च भुजं पश्चाच्चक्रेण च दहेच्छिशोः ।
तन्मांसं प्रदहेत् पश्चाच्छेपेणैव द्विजोत्तमः ॥२०॥
शीतोदके विनिक्षिप्य पूजयेत्सुसमाहितः ।
ततः त्रिस्त्वि(स्वि)ष्टकृतं हुत्वा होमशेषं समाव्हयेत् ॥२१॥
पूर्णपात्रोदकं गृह्य मंत्रयित्वा विचक्षणः ।
तेन संमार्जयेत्पुत्रं पवित्रं त इति ऋचा ॥२२॥
येन देवादि मन्त्रेण चान्यैरब्दैवतैः शुभैः ।
वैष्णवैश्चैव श(सू)क्तैश्च कुर्यात्संमार्ज्जनं शिशोः ॥२३॥

तस्य दक्षिणकर्णन्तु जपेदृष्टाक्षरं स्वयम्।
मूर्द्ध्नि हस्तं विनिक्षिप्य जपेद्द्वादशाक्षरम्॥२४॥
षडक्षरेण मन्त्रेण कुशैः सम्मार्जयेत्ततः।
नाम कुर्यात्ततः पश्चाद्वैष्णवं पापनाशनम्॥२५॥
मासैश्च वत्सरैश्चैव मूर्त्तिभिर्द्वादशैर्युतम्।
आरभ्य मार्गशीर्षेतु केशवाद्यैरधिष्ठितम्॥२६॥
मासे यस्मिन्तु यो जातस्तस्यतन्नामकीर्त्तितम्।
तस्यनैसर्गिकं नाम वैष्णवन्तु विधीयते॥२७॥
अन्यानि चैव नामानि गुणयोगे भवंति हि।
प्रथमं वैष्णवं नाम सर्ववर्णेषु कीर्त्तितम्॥२८॥
न चेत्तु वैष्णवोनाम यस्य वै द्विजसत्तमा।
अनामकस्सविज्ञेयः सर्वकर्मविगर्हितः॥२९॥
एवं हि नामकरणं कर्त्तव्यं द्विजसत्तमाः।
नास्ति (त) कर्मण्यलाभेतु विष्णोश्चक्रादि धारणम्॥३०॥
चौलोपनयने वापि तन्मन्त्राध्ययनेऽपि वा।
विधिना वैष्णवं चक्रं धारयित्वा द्विजोत्तमाः॥३१॥
कर्म कुर्यात्ततः पश्चाच्छ्रौतस्मार्त्तविधानतः॥३२॥

इति श्रीवशिष्ठस्मृतौ नामकरणादिविन्यासो द्वितीयोऽध्यायः

---

# अथ तृतीयोऽध्यायः

वैष्णवानां निष्क्रमणान्नप्राशन संस्कारवर्णनम्

वशिष्ठ उवाच ।

अथ मासे चतुर्थे तु गृहान्निष्क्रामयेच्छिशुम् ।
सुस्नाप्य समलंकृत्वा स्वस्तिवाचनमाचरेत् ॥१॥
अर्चयेत्प्रयतो विष्णुं कर्मभिश्च सुशोभनैः ।
कदलीफलसंयुक्तं दध्यन्नं च निवेदयेत् ॥ २ ॥
सहस्रनामभिःस्तुत्वा नमस्कृत्वा तु विष्णवे ।
पुरतो वासुदेवस्य होमं कुर्य्याद्विधानतः ॥ ३ ॥
आयं गौरिति मंत्रेण हंसःशुचिषदित्यृचा ।
परोमात्रेण सूक्तेन दध्यन्नं जुहुयाद् द्विजः ॥ ४ ॥
ततोऽर्कमंडले विष्णुं ध्यात्वा संपूजयेद्गुरुं ।
हिरण्यमयवपुर्देवं शंखचक्रगदाधरम् ॥ ५ ॥
पद्मासनस्थं देवेशं सर्वाभरणभूषितम् ।
कुमारमीक्षयेद्भानुं जपन्वै सूर्यदैवतम् ॥ ६ ॥
चित्रं देवानामिति च जपित्वा (जप्त्वा) ऽर्घ्यं निवेदयेत् ।
मंत्रस्यत्वेति जप्त्वा च नमस्कृत्य दिवाकरम् ॥ ७ ॥
ब्राह्मणं भोजयेत्पश्चाच्छत्त्ना(शक्त्या) दद्या(च्च) दक्षिणाम् ।
एवं गृहान्निष्क्रमणं शिशोःकुर्य्याद्द्विजोत्तमाः ॥ ८ ॥
अथान्नप्राशनं कुर्यात् षष्ठे मासि विधानतः ।
विराड्य ( विराडाख्यं ) हरिं तत्र पूजयेत्कुसुमैर्दलैः ॥९॥

शर्करान्यमभोपेत पायसं च निवेदयेत् ।
होमं कुर्याच्च विधिवद्दम्याधानादि पूर्वकम् ॥१०॥
पायसेनैव हुतान्यमाज्येन मधुनासह ।
प्रत्यर्चं पुरुषसूक्तेन जुहुयाद्वै समाहितः ॥११॥
इति सूक्तेन गायत्र्या वैष्णवेन (यथाविधि)।
प्राजापत्यन स्विष्टिति होमशेषं समापयेत् ॥१२॥
नत्वा च पौरुषं सूक्तं समभ्यर्च्य जनार्दनम् ।
हरेर्निवेदितं परवाच्छुभे पात्रे विनिक्षिपेत् ॥१३॥
दध्याज्यमाक्षिकैर्युक्तं प्राङ्मुखः पुरतो हरेः ।
होम्नाघाज्ञपतेऽन्नस्य इति मन्त्रेण प्राशयेत् ॥१४॥
विप्रांश्च भोजयेद्विद्वानाशीर्भिरभिनन्दयेत् ।
अथाष्टमे मासि कुर्याद्विष्णु पूजा विधानतः ॥१५॥
सेवनैः कुसुमैर्न्वैर्यपूजनयेन पुरुषोत्तमम् ।
शर्कराज्येन मधुयुक्त(मधुयुक्तं)सुपा (नैवेद्य)वि निवेदयेत् ॥१६॥
दीपैर्नीराजनं कुर्याद्दशोत्तरसहस्रकैः ।
गानं नृत्यं च वाद्यं च कुर्याच्छुभकरं तथा ॥१७॥
विष्णोर्नुकम्विति सूक्तेन अष्टौ जुहुयाद्घृतम् ।
होमशेषं समाप्याथ ब्राह्मणान् भोजयेत्ततः ॥१८॥
तृतीयस्तस्य चौलं कुर्यादुक्तविधानतः ।
नान्दीमुखेन सम्पूज्य पूर्वाह्णे पितृदेवतान् ॥१९॥
स्नात्वाऽपरेह्नि कुर्वीत स्वस्तिवाचनपूर्वकम् ।
अर्चयेन्माधवापुण्ये केशवं गरुडध्वजम् ॥२०॥

शर्कराज्येन संयुक्तं सूपान्नं (पक्वान्नं) विनिवेदयेत् ।
अष्टोत्तरसहस्रं तु जपेच्च द्वादशाक्षरम् ॥२१॥
नमस्कृत्वा तथा भक्त्या स्तुत्वा स्तुतिभिरेव च ।
प्राणायामत्रयं कृत्वा संकल्प्य विधिपूर्वकम् ॥२२॥
अग्नेरुत्तरतः स्थाप्य मुदकं गोमयं क्रमात् ।
व्रीहीयवमापतिलशमीपत्रप्रपूरितान् ॥२३॥
शरावान् पंच निक्षिप्य आघारान्तं विधाय च ।
आप्र अपा पुण्याभि त्रिभिश्च जुहुयाद् घृतम् ॥२४॥
प्रजापतेऽनन्वं दिति जुहुया द्वं ष्णवैस्त्रिभिः ।
शीतोष्णमुदकं नीत्वा पात्रे संयोजयेत्ततः ॥२५॥
उष्णेनवायचितिच मंत्रेणावभिषेचयेत् ।
नवनीतं दधियुतं गृहीत्वा कांस्यपात्रके ॥२६॥
अथैकविंशतिदर्भांश्छिन्नाग्रान् सुकोमलान् ।
ब्रह्मणा द्विजहस्तेन धारयेत्सुसमाहितः ॥२७॥
कुमारो ( रं ) मातुरुत्संगसंस्थितं वापयेत् पिता ।
श्लक्ष्णं पश्चात्समारभ्य शिरसि विप्र (हस्त) दक्षिणम् ॥२८॥
नवनीत्वा स्पृश्य केशान (नास्यमस्या) स्यावलोकयेत् ।
अदिति केशान् वपेसीत्यादयः (पद) मुहु(प)स्पृशेत् ॥२९॥
औपधित्वेत्वोपधीश्च संस्पृशेच्च पुनः पुनः ।
पश्चात्शिष्ट तमुत्रासादिति(मंत्र)रिति त(समुच्चरेत)पं क्रियः ।
येनावपदिति प्रथमं मंत्रेष्ट्याभिमुखं शिशुम् ।
त्रिभिश्च कुशसर्पित्कासहेवोशान् छिनत्ति च ॥३१॥

विन्यसत्ताम्रमापर्णे सहाऽनुदृह्गोमये ।
यन धानानि मन्त्रण द्वितीय जपत्तया ॥३२॥
एत तृतायपय्याय यन मूपति वै चपत।
सवमन्त्रैश्च लभ्यत वापयन्मुसमाहित ।
गयमुत्तरन पक्षं त्रिभिर्मन्त्रैस्तु वापयत ॥३३॥
यत्क्षुरणनि मन्त्रण क्षुरधारापमद च ।
नापितन तन पश्चात्कारयत्करा कनन ।
यन्त्रका धमच तथा चूडान्तु कारयत ॥३४॥
सा (शा) नाभि स्नापवद्विद्वान्कृत्य यथा शिशुम् ।
ब्राह्मणान्भोजयत्पश्चा ( त्विसृज्य ) पितृन्वत्ता ॥३५॥
ए (व) यथावन्न चौल कत्त व्य मुनि पुगवा ।
तूष्णोमेता कृता स्त्राणा विवाहमुसमन्त्रक ॥३६॥
आधानादष्टम वर्षे ब्राह्मणस्योपनायनम् ।
जन्मादष्ट वा कत्तव्य तथवावृतु पञ्चमे ॥३७॥
द्विज कुर्यात्कुमारस्य नव सूत्रस्य धारणम् ।
स्नात्वापरेऽन्हि पूर्वाह्ण कृतस्वस्त्ययनोबुध ॥३८॥
विष्णु सम्पूजयद्देव करवीर सुगन्धिभि ।
शाल्यान्न सुरयुत नवद्यश्च समर्पयेत् ॥३९॥
धूप दीप च ताम्बूल नत्तन गीतवादनम् ।
प्रदक्षिण नमस्कार कुर्याद् भक्ति समन्वित ॥४०॥
ततो देवस्य पुरतो होम कुर्याद्विधानत ।
कुमारस्य शरीरञ्चापि सुस्नातम् समलङ्कृतम् ॥४१॥

शुभे मुहूर्त्ते विमले निवेश्य च स्वदक्षिणे ।
अग्निसंस्थापनं कुर्यादुपलेपादि पूर्ववत् ॥४२॥
कुर्यादाघारपर्य्यन्तमग्न्याधानादिपूर्वकम् ।
जन्मकर्मण्यभावेन विष्णोश्चक्रादिधारणम् ॥४३॥
अत्र कुर्याद्विधानेन पश्चात्कर्म समाचरेत् ।
उपवीतं तथा वस्त्रं मे पापं (विशुद्धं) चोत्तरीयकम् ॥४४॥
मेखलाञ्चैव दण्डञ्च ( विधिवद् ) धारयेद्द्विजः ।
त्रयमूर्ध्नि धृतं तन्तु तन्तुत्रयमथावृतम् ॥४५॥
त्रि धृता ग्रन्थि संयुक्तं तत्पवित्रमिहोच्यते ।
कृतशौचं तथाशानं (स्नानं) उपवीतं व (च) धारयेत् ॥४६॥
एतस्मैनवचम्त्रेण मंत्रेणैव सुवाससी ।
ऋृग्भिः पद्भ्यामिति ऋचा धारयेदेनमाजिनम् ॥४७॥
मेखलां वेष्टयेमोन्मती (श्चैव) प्रावेयामित्यृचा तथा ।
एतक्ष्मनिच मंत्रेण पालाशं दण्डमेव च ॥४८॥
मृदा शुभ्रेण च तथा उद्ध्वं पुंड्ष्च धारयेत् ।
नामभिः केशवाद्यैश्च यथासंख्यं द्विजोत्तमाः ॥४९॥
ऊद्ध्वं पुण्ड्र मृजुं सौम्यं सुपाश्वं सुमनोहरम् ।
मध्ये छिद्रेण संयुक्तं श्रीपदाकृतकं हरेः ॥५०॥
ललाटे केशवं ध्यायेन्नारायणमथोदरे ।
वक्षःस्थले माधवंच गोविन्दं कण्ठके तथा ॥५१॥
विष्णुञ्च दक्षिणे कुक्षौ वाहुके मधुसूदनम् ।
त्रिविक्रमं कन्धरे तु वामकुक्षौ तु वामनम् ॥५२॥

श्रीधरं बाहुके वामे हृषीकेशं तु (वं) ( मुने ) करे।
अपरे (श्रीवायां) पद्मनाभश्च पृष्ठे दामोदरं तथा ॥४२॥
तत्प्रक्षालनतोयेन वासुदेवेति मूर्द्धनि।
मान्तरालोर्द्ध्वपुण्ड्रस्य मध्ये श्री विष्णुधामनि ॥४४॥
हरिद्रासार सम्भूता ता नर धारयेच्छ्रियम्।
ततोरेखा रचयेनापिपचरि (?) विसर्पयेत् ॥४५॥
तत प्रधान होमश्च कुर्वीत द्विजसत्तमा।
चौलेनो (चौलेन ) जुहुयान्मंत्रै राज्ञेव (राज्येनैव)
द्विजोत्तमा ॥४६॥
अनेरुत्तरतस्तिष्ठन्प्राङ्मुख प्रयतो गुरु।
आत्मनोऽभिमुखं कुर्यात्सावित्रीं मनसा स्मरेत् ॥४७॥
तत्सवितुर्वृणा (णीं) महे त्वर्द्धचेनाक्नसौ जले।
कुमारस्याञ्जली सिंचेत्सोऽपिभूमौ निवशयेत् ॥४८॥
देवस्य ? त्वति मन्त्रेण गृहीत्वा दक्षिण करे।
सुखमालो ( कयन ) स्तस्य मनसा सस्मरेद्धरिम् ॥४६॥
सावित्रीं नित्यपुत्रौ मूलमन्त्रेण संस्मरेत्।
नारायण जगन्नाथ स्वगुरुं मनसा स्मरन् ॥५०॥
आदित्य मण्डलान्तस्य (स्थ) ध्यात्वा विष्णु सनातनम्।
जपेद्वा प्रणमेच्चैव हंस शुचिषदित्यृचा ॥५१॥
ब्रूयात्कन्यानि वै (मंत्राणि) पश्चात् शेषं कर्म समाचरेत्।
युवासुवासार्द्धचेनावृतेन च प्रदक्षिणम् ॥५२॥

उत्तरेणार्द्धं चैव कुर्य्या(होमं)दिती समोहमम् (समाहितः)।
तूष्णीं समिधमादध्यान् ब्रह्मचारी हुतासनी ॥६३॥
अग्नये समिधमिति मंत्रेणैके तथैव च।
स्रुवेण परिषिचामीति कुर्य्यात्प्रदक्षिणं ततः ॥६४॥
अग्नौ प्रताप्य हस्तंत्रीरिदं मन्त्रमुदीरयेत्।
पादयोः प्रणमेत्पश्चादाचार्यस्य समाहितः ॥६५
जान्वा वै पाणि संगृह्यन्नहि मंत्रं ममेति च।
वाससा तस्य पादाभ्यां गृहीत्वा दक्षिणं करम् ॥६६॥
आचार्यस्तु वदेन्मन्त्रं यथा नियुक्तमार्गतः।
सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह ॥६७॥
न्यासं च विष्णुगायत्रीं द्वादशार्णं मनुं नया ( तथा )।
अध्यापयेद्विधानेन शौचाचारांश्च शिक्षयेत् ॥६८॥
होमशेषं समाप्याथ चरेद्भैक्ष्यं द्विजोत्तम।
स्वर्णे रौप्ये च कांस्ये वा शुभपात्रे शुभान्वितः ॥६९॥
अप्रत्या स्यापन द्विमागृहीयाच्छुभतण्डुलान्।
भत्तांव(भवति)मस्यां(भिक्षां)प्रदेहीति याचयेद् विनयान्वितः
अनिन्द्येषु च विप्रेषु चरेद्भैक्ष्यं समाहितः।
भिक्षालब्धं च यद् द्रव्यं ब्राह्मणे विनिवेदयेत् ॥७१॥
सूर्य्यास्ते तर्पयित्वा हि आसीत गुरुणा सह।
स्वा (रवा) वस्ति (स्त) मिते रात्रौहोमं ब्रह्मदिनेचरेत् ॥७२॥
स्नपयित्वा चरुं तत्र भिक्षालब्धैश्च तण्डुलैः।
तस्मिन्नग्नौ जु (सु) होतव्यं भिक्षाधानादि पूर्वकैः ॥७३॥

सदसस्पतिमद्भुतमृचाऽऽचामेत्तत परम् ।
ऋषिभ्य स्वाहेति तथा चरुणा जुहुयात्क्रमात् ।।७३।।
तत स्विष्ट कृताहीति होमशष समापयन्
ब्राह्मणान्भोजयत्पश्चादाशीर्भिरभिवन्दित ।।७४।।
आचार्येणाभ्यनुज्ञात भुञ्जात नियमा(तो)व्रती ।
त्रिरात्र सम्प्रहेद्भिमाचार्योनियत शुचि ।।७५।।
सम्प्राप्ते च चतुर्थेऽन्हि ग्रामान्निष्क्रम्य चैवहि ।
तत्रग्निसहितो गत्वा प्रागुदीचि दिश तथा ।।७६।।
यत्र सर्वं कुशाहत्य च म(अ) स्थले(स्थे)वा समाविशन् ।
तत्र सम्पूजयेद् वा(व)नुदक्रम्य हुताशनम् ।।७७।।
पालाश चैवोपचारेण गन्धपुष्पाक्षतादिभि ।
पालाल (श) पूजयेद् भक्त्या विष्णुरूपमनुस्मरन् ।।७८।।
पुरतो दृषता तत्र निनी ( पूजयेत् ) वा स्वस्वनामभि ।
श्रद्धा मेधा च सावित्री तथा प्रज्ञावधारणा ।।८०।।
एतानुद्दिश्यहोतव्या (व्य) आज्यमेध्यादि पृथक्कम् ।
तत प्रदक्षिण कृत्वा होमशष समापयेत् ।।८१।।
तानुदस्वैवेति मन्त्रेण नमस्कृत्य विसर्जयेत् ।
तत्रग्निमुत्सृतेव(त्त)त्र नच दहानिनानि च ।। ८२।।
धारयन्नूवव मत्र णैनान्त प्रयन शुचि ।
एव समाप्य वै पश्चाद्द्विना सम्मोजयेत्तत ।।८३।।
उद्दिश्य देवता तत्र पूजयेच्च गुचामनी ।
एव कृत्वा विधानेन गृहान्याच्छेत्तत परम् ।।८४।।

शौचादिकं समाचारमाचारे शिक्षयेद् गुरुः ।
आचार्य्याधीनवृत्तिस्तु ब्रह्मचर्य्यव्रतं चरेत् ॥८५॥
प्रतिवेदं द्वादशाब्दमष्टाब्दं पंचवर्षकम् ।
अब्दं चापि चरेद्भक्त्या यथाशास्त्रोक्तमार्गतः ॥८६॥
स्त्रीसंगं चैव ताम्बूलं गन्धमाल्याञ्जनं तथा ।
घृतं स्तेयं प्राणहिंसा (परद्वेषं) परशय्याऽपवादनम् ॥८७॥
मधुमा(मां)साशनं चैव कौटिल्यं परुषं वचः ।
कांस्यके भोजनं चैव प्रत्येकं व्रतलोपने ॥८८॥
अपराणि सर्वकर्माणि वर्त्त(र्ज)येद्द्विजसत्तमाः ।
मौञ्जीबन्धनमारभ्य शौचाचारं समाचरेत् ॥८९॥
आसेव्य दक्षिणे कर्णे ब्रह्मसूत्रं तु पृष्ठतः ।
प्राङ्मुखोदङ्मुखो वापि विण्मूत्रे विसृजेदशुभः ॥९०॥
दक्षिणाभिमुखो रात्रौ यथा सुखमुखस्तथा ।
उलिपयानं(अन्धकार)दिनः(दिने) शौचं कुर्य्यादुक्तविधानत
मृद्भिरभ्युद्धृतैरद्भिर्यथासंख्यं प्रशोधयेत् ।
अर्द्धप्रसृतिमात्रैस्तु मृद्भिरभ्युद्धृतैर्जलैः ॥९२॥
गन्धलेपक्षयकरं शौचं कुर्याद्यथाविधि ।
अपाने द्वादशप्रोक्तो षड्वारं मेहने च (तथा)मृत्तिका ॥९३॥
वामहस्ते दश प्रोक्ता उभयोः सप्त मृत्तिका ।
तथा त्रिभिश्चतुर्भिर्वा पादयोः क्षालनं स्मृतम् ॥९४॥
त्रिभिर्लिंगे करस्तद्वदुभयोर्मृद्द्वयं स्मृतम् ।
द्वे द्वे च पादयोर्मूत्रे शुक्रे चहि (द्वि)ग(गु)णंस्मृतम् ॥९५॥

अधोवायुनिसर्गेऽपि मूत्रे शौचवदाचरेत्।
स्त्रीशूद्रद्विजबन्धूनामर्द्धं प्रोक्तं मनीषिभिः ॥९६॥
रात्रावर्द्धं (द्धं) भवच्छौचं मार्गेऽप्येवं तथैव च।
यतीनां च वनस्थानां शौचं स्यात् त्रिगुणं स्मृतम् ।९७॥
कृत्वा शौचं विधानेन क्षाल्येद्धस्तपादकौ।
अन्तर्जानुः शुचौ देशे उपविष्टो ह्युदङ्मुखः ॥९८॥
प्राग्वा ब्राह्मेण तीर्थेन नित्यमाचमनं चरेत्।
अङ्गुष्ठमूलं ब्राह्मं स्यात्प्राजापत्यं कनिष्ठिकम् ॥९९॥
प्रादेशिन्याः पैतृकन्तु करस्य दैवतं स्मृतम्।
आग्नेयं मध्यमं विद्यात्तीर्थाचामे द्विजोत्तमाः ॥१००॥
प्राजापत्यात्तु होतव्यं देशिन्या पितृतर्पणम्।
कराग्रे (ग्रे) ण प्रदानं स्यान्मध्यमेन परिग्रहम् ॥१०१॥
हृदयङ्गमाभिरद्भिस्त्रिसम्प्राश्य स्पृशेत्।
स्नानमन्त्रैर्मन्त्रैर्मार्जनं वा समाहितः ॥१०२॥
मन्त्रद्वयेनाभिमन्त्र्य तस्मिन्ध्यायेत्सनातनम्।
अनन्तभोगपर्यङ्कशयानं रमया सह ॥१०३॥
ध्यात्वा निमज्य देवेशं त्रिपेठेदघमर्षणं (र्षणं)म्।
तथैव मन्त्रत्रितयेन तर्पयेदप्सु निमज्य च ॥१०४॥
ऋयायाचम्य विधिवद्देवतास्तर्पयेत्ततः।
उत्तीर्य्य वस्त्रं निष्पीड्य पुन (रा) चमनं चरेत् ॥१०५॥
आच्छाद्य धौतवसनं पुनराचमनं चरेत्।
धृतोर्ध्वपुण्ड्रदेहस्तु पवित्रकर एव च ॥१०६॥

उपासीत ततः सन्ध्यां प्राङ्मुखोदङ्मुखोऽपिवा ।
अञ्जलीनिकरो भूत्वा प्राणायामान्समाचरेत् ॥१०७॥
सव्याहृतिकां सप्रणवां गायत्रीं शिरिणा (रसा) सह ।
सकृत्स्मृत्वा (आदि पुरुषं) णाहृद्य पुष्टेनाङ्गुस्यां(प्राणान्हृदि) न्यसेवपत् ( निवेशयेत् ॥१०८॥
वामेना ( सा ) पुटेनैवल्वामुमा (?) परतस्ततः ।
तथैव कुम्भकं कृत्वा रेचयेद्दक्षिणेन तु ॥१०९॥
प्राणायामत्रयं कृत्वा संध्या होमजपादिषु ।
व्याहृतीनान्तु सर्वासामृषिश्चैव प्रजापतिः ॥११०॥
छन्दश्च देवी गायत्री परमात्मा च देवता ।
ब्रह्मर्षिः चैव गायत्री सविता देवता स्मृता ॥१११॥
एवंज्ञात्वा विधानेन प्राणायामं समाचरेत् ।
आपोहिष्ठेतिमन्त्रेण मार्जयेत्तु द्व्येन च ॥११२॥
सूर्य्यश्चमेति मंत्रेण मंत्रवित्तमभिवादयेत् ।
मंत्ररत्नेन संप्राश्य पश्चादाचमनं चरेत् ॥११३॥
आपोहिष्ठेति मन्त्रेण पुनः सम्मार्जनं ततः ।
इत्यापार्के प्रतिपाहेतृचा त्र्यत्र्या अतन्द्रितः ॥११४॥
आदित्यमण्डलान्तस्थं ध्यात्वा विष्णुं सनातनम् ।
शुद्धस्फटिकवर्णाभं कोमलाङ्गायुधैर्युतम् ॥११५॥
सुस्निग्धनीलकेशान्तं रत्नकुण्डलशोभितम् ।
पद्मासनस्थं देवेशं मुक्तादामविभूषितम् ॥११६॥
शुक्लमाल्याम्बरधरं शुक्लगंधानुलेपनम् ।
वामांगे च श्रियायुक्तं ध्यात्वा मन्त्रं जपेद्बुधः ॥११७॥

मा च प्रेमत्र रत्न च जपोऽयो दशन रराान(?) ।
उदुत्यमिति सूक्तेन चोपस्थानं विसर्जयेत् ॥११८॥
वैष्णवेषु च मन्त्रेषु भिक्षाचरणमाचरेत् ।
न (मैक्ष)प्रेते (म्ले)च्छत्वे तु तण्डुला नितरेषु वा ॥११९॥
आपद्यपि न गृह्णीत पाषण्डपतितादिषु ।
दण्डाजिनोपवीतानि मेखलानि च धारयेत् ॥१२०॥
भिक्षालब्ध च यद्द्रव्यमाचार्याय निवेदयेत् ।
तस्य प्रसादरूपेण भुञ्जीत तदनुज्ञया ॥१२१॥
शुभे पात्रे च शुद्धान्नं गायत्र्या चाभिमंत्रयेत् ।
सत्य त्वर्तेन परिषिञ्चामीति प्रदक्षिणम् ॥१२२॥
परिषिच्यत्यनेनैव हरिण वैष्णवेषु च ।
पञ्चप्राणाश्च जुहुयात् पञ्चैताऽऽहुतय क्रमात् ॥१२३॥
ध्यायन्नारायण देव ततो भुञ्जीत वाग्यत ।
अमृतापिधानमसीत्याप प्राश्य विचक्षण ॥१२४॥
किञ्चिदुच्छिष्टमादाय मोन्क निर्वपेद्भुवि ।
मखे पुरस्य (?) निलयेप आनुद निवासिनाम् ॥
अर्थिनामुदक नित्यमक्षय्यमुपतिष्ठतु ।
तत्र प्रक्षाल्य तोयेन मुखहस्त मृदा सह ॥१२५॥
दन्तान्काष्ठेन सशोध्य गण्डूषैश्चैव वारिभि ।
प्रक्षाल्य हस्तौ पादौ च सम्यगाचमनं चरेत ॥१२६॥
उच्छिष्टपात्र तमभि सप्राश्य च विशुध्यति ।
यावच्च दन्तपर्यन्त तावदध्ययन (चरेत्) पठेत् ॥१२७॥

अस्तं गते दिनकरे सन्ध्यां पूर्ववदाचरेत् ।
शौचाचमन स्नानादि (न्तं) यथाविधि समाचरेत् ॥१२८॥
शीतोदके त्वशक्तश्चेत्कुर्यादुष्णेन वारिणा ।
मंत्रद्वयेनाभिमन्त्र्य स्नानं तत्कर्म शुद्धये ॥१२६॥
शुचिवस्त्रधरः सम्यगाचम्य विजितात्मवान् ।
धृतोर्ध्वपुण्ड्र (दृह) कोपश्च सन्ध्यां कुर्याद्यथाविधि ॥१३०॥
प्राणायामंच विधिवत्पूर्ववन्मार्जयेत्ततः ।
अग्निश्चमेति मंत्रेणापः प्राश्याचमनं चरेत् ॥१३१॥
पुनः सम्मार्जनं कृत्वा पश्चादर्घ्यं (र्घ्यं) निवेदयेत् ।
उत्थाय मण्डले ध्यात्वा वासुदेवं सनातनम् ॥१३२॥
नीलोत्पलदलश्यामं रक्ताम्भोरुहलोचनम् ।
शंखासिशार्ङ्गवज्रधरं पीतवस्त्रं चतुर्भुजम् ॥१३३॥
पद्मनाभं श्रियायुक्तं ध्यायेत्सवितृमण्डले ।
दद्यादर्घ्यत्रयंतस्मै गायत्र्या विनयान्वितः ॥१३४॥
आसीनश्च जपं कुर्यात्स्वल्पमष्टोत्तरं शतम् ।
तथामंत्रद्वयं जप्त्वा द्व्यक्षितपाना रविं ॥१३५॥
उपस्थाय च सूक्तेन नमस्कृत्य विसर्जयेत् ।
अग्नि कार्यं ततः कृत्वा गुरून्नत्वाभिवादयेत् ॥१३६॥
भैक्ष्यं चरेद् यथापूर्वं परिसंख्या तथा निशि ।
ऋतं त्वां सत्येन परिषिंचामीति पूर्ववत् ॥१३७॥
अश्री(श्नी) याद्धि (च) यथाशक्त्या स्वाध्यायाध्ययनं ततः ।
शुचौ देशे शुचिर्भूत्वा शयीत नियतेन्द्रियः ॥१३८॥

उत्थाय पश्चिमे यामे यामं ध्यानं समाचरेत् ।
एवं प्रतिदिनं कुर्याद् ब्रह्मचारी जितेन्द्रिय ॥१३९॥
वेदव्रतानि तत्कार्ये कुर्याद्विप्रो यथाविधि ।
अध्यापनमुपाकर्म श्रावण्या श्रवणेऽपि च ॥१४०॥
हस्ते चोत्तरमाने या पञ्चम्या श्रवणेऽपि वा ।
नदीं गत्वा तु पूर्वाह्णे गुरुणा सहितो व्रती ॥१४१॥
तत्र स्नात (त्वा) विधानेन तर्पयेद्देवतानृषीन् ।
अर्चयित्वा शुचौ देशे हरिं सर्वगतं तथा ॥१४२॥
परितः पूजयेद्देवानृषींश्च कुसुमाक्षतैः ।
विमला सुरगीतानं तद्धारा पराङ्गिणः ॥१४३॥
शार्के राजममे युग्मं सत्य ह्मग्नं निवेदयेत् ।
अष्टोत्तरसहस्रं तु जपेदष्टाक्षरं मनुं ॥१४४॥
तत्र सम्पादयेदग्निमुपलेपादि पूर्वकम् ।
दया(धा)राज्य भागंच कृत्वा होमं समापयेत् ॥१४५॥
श्रद्धामेधा च सावित्री तथा प्रज्ञावधारणा ।
एतानुद्दिश्य होतव्यं सक्तु साज्य सशर्करम् ॥१४६॥
मण्डलाख्याय भूम्याय सूर्य विष्णुप्रकाशकं ।
ततः स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥१४७॥
उपवीतानि देवस्य दद्यादष्टोत्तरं शतम् ।
अष्टाविंशति वा दद्याद्भक्त्या देवस्य शार्ङ्गिणः ॥१४८॥
सुगन्धपुष्पधूपाद्यैर्नैवेद्यैर्विविधैस्तथा ।
पूजयित्वा विधानेन नमस्कृत्य च भक्तिमान् ॥१४९॥

प्रागग्रेषु कुशेष्वेवमासीनः पुरतो हरेः ।
वेदानध्यापयेत्तत्र सांगोपांगसमन्वितान् ॥१५०॥
समाप्तिं वाचयित्वाथ ब्राह्मणान्भोजयेत्ततः ।
तदाप्रभृति वै शिष्यान्नित्यमध्यापयेद् गुरुः ॥१५२॥
यथाधीयीत तथा रात्रौ तस्मिन्नासीतद्विजोत्तमः ॥१५३॥
पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ।
ऋतु संधिषु भुक्त्वा वा श्राद्धेषु प्रतिगृह्य वा ॥१५४॥
संध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ।
सक्ष्यं(साप्य)वेदं (य्यु निशा) मारण्यकमधीत्य च ॥१५५॥
त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरु बन्धुषु ।
अकालवर्षेऽनध्यायस्त्रिरात्रन्तु विचक्षणः ॥१५६॥
अनध्यायदिनं वर्षं सोमरो ना विधीयते ।
अयने विषुवे चैव शयने भोजने तथा ॥१५७॥
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ।
अपरेषु च पक्षेषु अष्टकादिस्मृतिष्वपि ॥१५८॥
हेमन्ते शिशिरे चैव नाध्यापयेद्वेदसंहिताम् ।
अन्वष्टकाव पूर्वेषु अष्टका इति सस्पत्व (शाश्वतम्) ॥१५९॥
देशेऽशुचावात्मनि च विद्युत्स्तनितसंक्षये ।
भुक्त्वाऽर्द्रपाणि रंभोऽन्त रर्द्ध रात्रेऽतिमारुते ॥१६०॥
अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके ।
पांशुप्रस्कन्धदिग्दाह संध्यानीहार भीतिषु ।
धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥१६१॥

श्वक्रोष्टुगर्दभोलूकसामवाणार्त्तनि स्वने ॥१६२॥
खरोष्ट्रयानहस्त्यश्वनौवृक्षेरिणरोहणे ।
तत्कालिकाननध्यायान्वदन्ति मुनिसत्तमा ॥१६३॥
पशुमण्डूकनकुलश्वाहिमार्जारमूषकैः ।
कृतेऽन्तरेत्वहोरात्रमनध्याय प्रकीर्तितम् ॥१६४॥
सिंहव्याघ्रवराहोष्ट्रमृग(यानेषु) जानिपु थे(वा) त्यजे ।
अन्तरागमनेन्वाप्ट (?) वाध्यायेच्छकटार्धकम् ॥१६५॥
गच्छेमा(द)नन्तरं वापि जानुभ्या भुवि शुद्धये ।
परे (चरेत्) चान्द्रायण वापि जानुभ्या भुवि शुद्धये ॥१६६॥
एवमध्यापयेच्छिष्यान्वाग्यत सयतेन्द्रिय ।
शनैश्चशिक्षयेच्चैव न च पारुष्यवाग्भवत् ॥१६७॥
शयान प्रौढपादो वा तैलाभ्यक्तशिरास्तथा ।
नाध्यापयेत्तथा शिष्यान्नच पर्यङ्कमस्थित ॥१६८॥
कृताञ्जलिस्तस्य मनो गुरोरभिमुख शिशु ।
अधीयीत तथा शिष्यो वाग्यतो नियतेन्द्रिय ॥१६९॥
एवमध्ययन कुर्यात्तर्पयेद्देवतान् पितॄन् ।
उत्सर्जन तथा कुर्यात् पौषे मासेऽष्टकासु च ॥१७०॥
रोहिण्यां श्रवण वापि पौर्णमास्यामथापि वा ।
उपाकर्मविधानेन कुर्याच्छिष्याग्रतो गुरु ॥१७१॥
स्नात्वा विष्णु समभ्यर्च्य तर्पयेत्पितृदेवता ।
पयसा स्नपयित्वा तु ननाग्निनि (?) दुयान् ॥१७२॥

शर्कराज्येनसंयुक्तां तिलैस्त्था जुहुयात्ततः ।
तर्पयित्वा पितॄन्देवान् कुर्य्यादुत्सर्जनं ततः ॥१७३॥
वर्षे वर्षे प्रकर्त्तव्यं वेदाध्यापनपारगैः ।
अध्यापनमुपाकर्म तथैवोत्सर्जनादिकम् ॥१७४॥
समस्तसंहितायान्तु महानाम्नीव्रतं चरेत् ।
आरण्यके वेदभागमवधार्यवनान्तरे ॥१७५॥
उदगयनं पूर्वपक्षे स्थालीपाली (कादिभिः) सितैर्युतम् ।
आचार्यो जुहुयात्तत्र अग्न्याधानादिपूर्वकम् ॥१७६॥
मनोहरे शुचौ देशे तरुच्छायासु शीतले ।
अर्चयेज्जगतामीशं पुष्पैरारण्यसम्भवैः ॥१७७॥
अन्यानि फलमूलानि भक्ष्याण्येव निवेदयेत् ।
नमस्कृत्वा तु जुहुयान्मूलमंत्रेण मंत्रवित् ॥१७८॥
नारायणानुवाक्येन तिलसंम्मिश्रितं चरुम् ।
अग्नावग्निश्चरेत्यादि जपेन्मंत्रैः पृथक् पृथक् ॥१७९॥
हुत्वा व्याहृतिभिः पश्चाद्धोमशेषं समापयेत् ।
आदित्य मण्डलान्तस्थं ध्यात्वा विष्णुं सनातनम ॥१८०॥
मंत्रेणार्घ्यं प्रदातव्यं त्वंततानामिति द्विजः ।
त्रिरात्रमेकरात्रम्वा दीक्षां कुर्वीत वैदिकीम् ॥१८१॥
अध्यापयेत्ततःशिष्यान् विद्यामारण्यकीं गुरुः ।
पुरतो वासुदेवस्य निर्जने विज(पि)नेपः (स्थितः) ॥१८२॥
अधः शायी ब्रह्मचारी दीक्षितो नियतोव्रती ।
प्रागेव भोजनादत्र ह्यवेतव्यं(अधीयीत)समाहितैः(तः) ॥१८३

नापराह्णे न सायाह्ने रात्रावपि न कीर्तयेत्।
एवमध्यापयेच्छिष्यान्विद्यामारण्यकीं बुध ।।१८४।।
तदर्थमधिगन्तव्य समानाम्नापराममे (?)।
समाप्ततो ब्रह्मचारी यावन्ध्ययनभवन् ।।१८५।।
प्रतिवेदसमाप्तौ तु शक्त्या सम्पूजयेद् गुरुम्।
तौ(औ)न्त(द्)नारयत्न सर्वं कुर्याद् व्रत समापयेन् ।।१८६।।
चौलकर्मविधानेन कुर्याद्वेदव्रत स्वयम्।
स्याश्रु (स्वस्ति) वाचनमेवात्र स्वयं कुर्वीत पूर्ववत् ।।१८७।।
समाप्य वद गुरवे दद्याद्गोदक्षिणावसुम्।
येन्येतानि पुराणानि सेतिहासानि शक्तित ।।१८८।।
शास्त्र मन्वादिकचैव यथाश (शक्ति) सभ्ययन(समभ्यसेत)
वन्व्रतानिपाश्यानोव्याहमयमेव (?) हि ।।१८९।।
गुरव दक्षिणा दत्त्वा स्नायीत तदनुज्ञया।
व्रत सव तत्वारत्य(औन्नारत्य) हि होमपूर्वकमाचरेत् ।।१९०
स्नात्वा स्वध्ययन कृत्वा होमपूर्वं समाचरेत्।
उपलपादिपूर्णेण चौलोक्त व्याहृते क्रमात् ।।१९१।।
हुत्वा तत समभ्यर्च्य हानत्य चाग्निर्के शुभे।
ममाग्निर्वचस्यादिदशभि प्रत्यृच हुवन् ।।१९२।।
होमशेष समाप्याथ मंगलस्नानमाचरेत्।
मेखलाजिन दण्डादि(नि) ब्रह्मचर्य्य सवनानि (व्रतानि) च ।।
मुक्त्वे (क्त्वा) नवानिवासासि धारयेत्समलंकृत।
कर्णयो कुण्डलं चैव चक्षुषोश्चाञ्जन तथा ।।१९४।।

कटे (ट्यां) च मणिसूत्रं च उपानच्छत्रमेव च ।
चन्दनं कुङ्कुमं चैव वेणुं वंसकमण्डलुम् ॥१६५॥
धारयित्वा गुरुं म(न)त्वा ब्रह्मचर्य्यं समापयेत् ।
पूर्वेषु सर्वतीर्थेषु सम्यग्विष्णुं समर्चयेत् ॥१६६॥
अयुतं च जपेन्मन्त्रं वृतं (तो) नित्य मतीन्द्रियः (तन्द्रितः) ।
तर्पयेज्जुहुयाच्चैव नामभिः कीर्त्तयेत्सदा ॥१६७॥
ब्रह्मचर्योक्तमार्गेण सकृद्भोजनमाचरेत् ।
विष्ण्वालये वसेद् वापि शायीत(शयीत)नियतेन्द्रियः ॥१६८
नालपेद् विष्णवभक्तैर्वचनैस्सह (न तैश्च) संचरेत ।
एवं व्रतं चरेत्स्या (ष्या) त्वा विजितःसंजितेन्द्रियः ॥
यावदाचार्य वाक्यं हि तावत्कालं समाचरेत् ॥१६९॥
इति श्री वशिष्ठ संहितायां चौलोपनयनादिकथनं नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

# अथ चतुर्थोऽध्यायः

## गृहस्थधर्मवर्णनम्

वशिष्ट उवाच

गुरवे दक्षिणां दत्वा यमिक्षेमं (योगक्षेमं) समाचरेत् ।
विरक्तः प्रव्रजेद्विद्वाननुरक्तो गृहे विशेत् ॥ १ ॥
नैष्ठिकेन व्रतेनापि यावज्जीवं समाचरेत् ।
वसेदाचार्यसंङ्काशे विष्णोर्वा वैष्णवेषु वा ॥ २ ॥

अ(थ)थ वा परिचर्य्याया विष्णोर्द्देवस्यशा (शा) ङ्गिण ।
वैष्णवाच (चार) यत्नद्धर्थमुद्वाहेदुत्तमां स्त्रियम् ॥ ३ ॥
अरोगिणीं भ्रातृमतीं समानार्षगोत्रजा ।
पञ्चमे सप्तमे चैव मातृत पितृतस्तथा ॥ ४ ॥
दशपूर्वापरविख्याताश्रोत्रियाणा महाकुलात् ।
शीललक्षणसम्पन्ना बुद्धिरूपकुलोचिताम् ॥ ५ ॥
पाखण्ड शामत (म्लेच्छ) पतितां सम्भूम्यस्तां विसर्ज्जयेत् ।
लक्षैरेव गुणैर्युक्त सर्वोत्कृष्टस्तथैव च ॥ ६ ॥
विज्ञानपसमायुक्तो वर सत्स्वरूपवान ।
विष्णो तनोऽनुपूर्वेण विवाहोब्राह्मणस्य वै ॥ ७ ॥ ॥
राज्ञो द्वे च विशश्चैका न शूद्रा नोद्वहेद्द्विज ।
शूद्रस्य तु सवर्णा च विवाहोत्तरोत्तरस्तथा ॥ ८ ॥
ह्यनुलोमा विवाहास्तु नोद्वाह्या प्रातिलोमा(मि) का ।
पैतृष्वसी च नोद्वाहेत्तथा मातु स्वसु सुता ॥ ९ ॥
मातुलस्य च पौत्रीं वा मातामहसुता तथा ।
ब्राह्म दैव प्रजापत्यमार्षश्चेति शुभास्तथा ॥१०॥
अतुल्या ब्राह्मणाहार्हश्च तारयन्ति द्वयो कुलम् ।
राक्षसासुरगान्धर्वपैशाचा गर्हितास्तथा ॥११॥
आहूय दीयते कन्या सा कन्या समलङ्कृता ।
ब्राह्मो विवाहोविज्ञेयो (य ) सर्वं क्रतुफलंस्मृतम् ॥१२॥
यज्ञस्यऋत्विजो दद्यात्स दैवोद्वाह उच्यते ।
वरश्चाहूय समादाय स आर्ष इति दीयते ॥१३॥

सधर्मचरितः (सोऽयं) प्राजापत्य उदाहृतः ।
विवाह आसुरः प्रोक्तः शुल्कमादाय दीयते ॥१४॥
राक्षसो युद्धहरणात् गान्धर्वः समयापितः (समयान्मिथः) ।
यश्चौर्येण स पैशाचो मुनिभिः समुदाहृतः ॥१५॥
कन्यांवरयमाणानामेवंधर्मो विधीयते ।
सुहृदोमन्त्रवन्तश्च चत्वारो ब्राह्मणाः शुभाः ॥१६॥
तां कन्यां वरयेत्पूर्वं जय(पि)त्वेदसमान्तरम् ।
अतो देवेति सूक्तेन प्राग्मातश्च इति ऋचा ॥१७॥
अनर्क्षराजवेपश्चात्कन्या वैवाहिका शुभा ।
जपत्वैवरयेत्कन्या कुसुमाक्षतपाणयः ॥१८॥
अमुष्यपौत्रींवामुष्यपुत्रीं वाऽमुकगोत्रजाम् ।
इमां कन्यां वरायास्मै वयं तद्विवृणीमहि ॥१९॥
(तव पाद्य) तत्रपाध्यमितिब्रूयाद्यूयोऽसौ कन्याप्रदायकः ।
वरो वधूगृहंगच्छेत् गीतवादित्रनिःस्वनैः ॥२०॥
पतिपुत्र (वती) पुनः स्त्रीभिस्तथाविप्रैः शुभान्वितैः ।
मंगल द्रव्य संयुक्तो जपन्वै वेद संहिताम् ॥२१॥
प्रक्षाल्यपादावाचम्य स्वस्तिवाचं समाचरेत् ।
भगवन्परिचर्य्यार्थमित्युदीर्य्योद्वहेत्स्त्रियम् ॥२२॥
ततो (व) विद्यां संहितायां पालिकाध्वजतोरणैः ।
पूजयेद्देवदेवेशं पङ्कजैः कुसुमैः शुभैः ॥२३॥
अर्चयेद्रमयासार्द्धं दिव्यगन्धैर्मनोहरैः ।
पायसं शर्कराज्यादि प्रभूतफलसंयुतम् ॥२४॥

सुशीतलं पानकं च कर्पूरेण सुवासितम् ।
सपूगनागपत्रा (त्रा) दि ताम्बूलञ्चसमर्पयेत् ॥२५॥
पश्चान्नीराजनं कृत्वा सर्वं वस्तु निवेदयेत् ।
पश्चात्पुष्पाञ्जलिं दद्यान्नमस्कृत्य च शार्ङ्गिणम् ॥२६॥
श्रीकेशव जगन्नाथ उभयो पादपद्मयो ।
अनयासह सर्वत्र परिचर्य्या मयाऽस्तु मे ॥२७॥
एवं सम्प्रार्थ्य देवेश पश्चात्कर्म समाचरेत् ।
देवस्य पुरतोऽग्निं प्रतिष्ठाप्याथ पूर्वजम् ॥२८॥
आज्यं संस्कारपर्यन्तं कृत्वा सम्यग्विधानत ।
पूर्वितोमधुपर्केण कन्यायाश्च मदापकात् (?) ॥२६॥
नवन्निकार्तहिता च कन्या स मिंगलकृताम्(?) ।
ईक्षयेत्सुमुहूर्ते तु मन्त्रेण घोरचक्षुषा ॥३०॥
साद्रा (द्रौ) क्षतारचदूर्वांश्च कन्यां (च) समलङ्कृताम् ।
लाजाक्षतानिमर्वाणि पुष्पाणि सुरभीणि च ॥३१॥
सौर्यस्त्वरयामूर्ध्नि विकीर्येता मनस्विनाम् (?) ।
कन्यामुदकपूर्वा च दद्यं (दद्यात्) कन्याप्रदायक ॥३२॥
वर लक्षणसंयुक्तं विष्णुरूपमनुस्मरन् ।
पितादद्यात्सुकन्यां (च) तदभावे पितामह ॥३३॥
तदभावे पितृव्य स्यात्तदभावेऽपिसोदरः ।
तदभावे तु जननी तदभावेऽपिगोत्रज ॥३४॥
तदभाव तु बंधु स्यात्तदभावे नृप (उच्यते) स्मृत ।
दातृणामप्यलाभे तु कन्याकुर्यात्स्वयम्वरम् ॥३५॥

अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ।
माता पिता तथा भ्राता पितृव्यश्च पितामहः ॥३६॥
सर्वे तु नरके यान्ति दृष्ट्वा कन्यां रजस्वलाम् ।
तस्मात्प्रागजमुत्पत्तेः कन्यां दद्याद्विचक्षणः ॥३७॥
उच्चार्य्य ग्रा (ना) मगोत्रे तु दद्यादुदकपूर्वकम् ।
कइदं कस्मादादित्यादिजपेन्मंत्रं ( ? ) समाहितः ॥३८॥
धर्मे चार्थे च कामे च नातिकाम्येति च ब्रुवन् ।
अहं नाति चरामीति वरो हन्याहतास्त्रियम् (?) ॥३६॥
वरः प्रत्यङ्मुखो भूत्वा गृह्णीयात्वप्राङ्मुख (स्त्री) म् ।
स्वस्त्रियं कर्त्तव्यानि च कर्माणि च स्त्वह्योसमाचरेत्(?) ॥४०॥
सुहृदोमंत्रवन्तश्च गृहीत्वाजलपूरितम् ।
कलशं मृण्मयं तौ तु मार्जयेत्तुकुशैर्जलैः ॥४१॥
अनुपृष्ठमसीत्यादि मन्त्राभ्याम्परिमार्जयेत् ।
नतस्यस्याशिरसि (?) च निधाय कुशपूर्वकम् ॥४२॥
दक्षिणं (?) तु युगच्छिद्रं मंसः सौवर्ण (?) संयुतम् ।
भ्रनप्पंस्लाप (?) नितस्मस्याशिरसि च ।
निधायकूपे (?) नायाचमानैः शुभाहूये ॥४३॥
वासोभिः समलंकृत्य योक्त्रैणैव तु वेष्टयेत् ।
तौ परस्परयो (?) मूर्ध्नि सेचयेदसितान्शुभान् ॥४४॥
ऊर्णामयंकङ्कणन्तु वध्नीयाच्च तयोः करे ।
पश्चात्तु पुरतोवन्हेः स्थित्वा चैव सुखासने ॥४५॥

स्म्य दक्षिणत कन्यामूर्ध्वेश्याऽज्मनेशुभे ।
पश्चादुत्तरतोऽग्निमसे स्याप्यशुभान्वितम् ॥४६॥
उन्कुम्भं पुरस्तात्तु मध्येमत्रदाचितम् ।
तण्डुलैरचशुभं स्थाप्य पश्चात्कर्मसमाचरेत ॥४७।
तस्या समन्वारन्धाया जुहुयाद्वर क्रमात् ।
अमर पापितिसृभिरचनु (भि) चयर्य(सपर्य)या ॥४८॥
आज्येन जुहुयादग्नौ क्रमाण्य (भि निधानत )अन्याधानमा ।
निष्टप्त्यस्यदृशुयस्तत्र प्राङ्मुख्या (च) स्त्रिया करे ॥४९॥
प(अ)पत्रमोह मन्त्रोनि ति) वरो कुर्यात्प्रदक्षिणाम् ।
आरोपयेनयाश्मानमीममस्मानमीत्यृचा ॥५०॥
यथ्यानलादुपम्मोर्थे (र्थ्य) भ्राता तस्यनरोऽपिवा ।
द्वितलोतानानुयेत्यस्मिन्तो ,त्रिति) पूर्वं स्रुवण तु ॥५१॥
अब्जिन्त्येयातनिना (?) च जुहुयाद् समाहुतिम् ।
अर्यमुतानु देवा इति मत्रण प्रथमं तप (?) ॥५२॥
यन्य द्वितीयेति तृतीय (?) पूष्णान्वितिनूष्णीं सूर्पपुदेव
जुहुयात्पूर्वकर्मणि (?) ।
अश्मान्यारोह (ह) ता चैव परिणायनमेव च ।
प्रदक्षिण प्रकर्त्तव्य मत ऊर्ध्वं विकल्पितम् ॥५३॥
प्रन्यामुचामिनचणानिपाटुणानित्वं कर्मणि ।
अश्मान्यारोहता चैव परिणायनमेव च(धनम्) ॥५४॥
आक्रम्योत्तरस्यान्तु दिशिसप्तपदानि तु ।
गृहीत्वैवपदाङ्गुष्ठ तेषुसक्रमयेत्पति ( न्यति ) ॥५५॥

दूपर्णेन ( द्वयर्ण ) पदेत्यादि मंत्रैः समभिरेव च ।
तयोः शिरसि सिंचेत पूर्णकुम्भोदकैर्जलैः ॥५६॥
ब्राह्मण्यो जीवपत्यस्तु दृष्ट्वाताविभिनन्दयेत् ।
ततः स्विष्टकृते हुत्वा होमशेषं समापयेत् ॥५७॥
स्पस्तमयप्यंत सणचेद्यानिवेशिनौ ।
अरुंधतीवशिष्ठे च ध्रुवं सप्तऋषीन्स्तथा ॥५८॥
दृष्ट्वाचैव नमस्कृत्वा (त्य) सायंहोमसमाचरेत् ।
प्राणायामेन संकल्प्य परिषिच्य हुताशनम् ॥५९॥
पूजयित्वाश्रियासार्द्धं जुहुयादाहुतिद्वयं ।
तण्डुलैश्चयवौवीवितिलैर्व्रीहिभिरेव च ॥६०॥
अन्यैःवापिशुभैं द्रंव्यै वर्जयित्वा च कोद्रवान् ।
अग्नये स्वाहेति पूर्वं प्रतापन्यं द्वितीयकम् ॥६१॥
प्राजापत्येनतीर्थेन पूर्ण मङ्गल्यवारिभिः ।
जुहुयात्परिपिंत्याथ उपस्थानं जपेद् बुधः ॥६२॥
अग्नेत्वं तु अतमेति द्वाभ्यांत्ररभ्यां(?)हुताशनम् ।
संस्थापयेदुपस्थाप्य नमस्कृत्वा(त्य) विसर्जनम् ॥
प्रातः सूर्याहुत होमप्राजापत्यमनन्तरम् ।
सूर्योनो दिवस्पत्वितिसूक्ते (?) नात्वेव जपेद्बुधः ॥६४॥
एवमग्निश्च जुहुयादुद्वाहप्रभृति द्विजः ।
सायं प्रातः स्त्रियासार्द्धं तदग्नि प्रणमेत्सदा (तदग्निनप्रमयेत्)
एवं होमविधानेन सायंहुत्वाहुताशनम् ।
ब्राह्मणान्भोजयेत्पश्चादाशीर्भिरभिनन्दितः ॥६६॥

अन्नारत्नवर्णं शुद्ध भुञ्जीत (यान्) शुभाचिनो (न्वित) ।
पुष्पालङ्कारवस्त्रादि वैष्णवौ (?) समलङ्कृत ॥६७॥
सत्यवाचा च यस्मतो दीक्षितो ब्रह्मचारिणौ (?)
अर्चयेत श्रियायुक्तं पुराण पुरुषोत्तमम् ॥६८॥
वस्त्रालङ्कारपुष्पादिधूपदीपनिवेदितै ।
ब्राह्मणान्भोजयेत्पश्चाद् यथाशक्त्या च दक्षिणा(विचक्षण)
त्रिरात्र दशरात्रं वा सम्वत्सरमथापिवा ।
समन्वितन्न मौम्यातो (?) दम्पती समलङ्कृतौ ॥७०॥
तत स्वमालय गच्छेद्भार्यया सहितो बुध ।
अग्निहोत्राह्निकाद्विन्हि न यत्नमन समन्वितम् ॥७१॥
यूपात्वतानिमित्रेणयानमारोहये (?) (स्वाद्) दुबुध ।
आत्मन्यत्तीर्थर्द्धं येनमध्या (?) तु तारण ॥७२॥
कल्याणदेशानुगोऽधमविधान भूषजपेन् ।
सुमङ्गलैस्त्वचा वापि तत्र तत्र च तर्पयेत् ॥७३॥
आपान्देवीतिनिनपेत् (?) वे द्विनीति जपेद्बुधम् ।
भगवन्त पुरस्कृत्य प्रविशेत्तु स्वमालये ॥७४॥
इह प्रिय नपेन्मन्त्र तु (२) र्व्यघोषपुरस्कृतम् ।
प्रविश्य स्वगृहे रम्ये तस्मिन्सम्पूजयेद्धरिम् ॥७५॥
वितानादि सुशोभाभ (द्य)मण्डले सुमनोहरे ।
पूजयेत्पुष्प शय्यायाश्रियासार्धं सनातनम् ॥
पुष्पैर्मनोहरै शुभ्रै र्गन्धैरामोदितै शुभै ।
धूपैर्दीपैश्चताम्बूलैश्चामरैस्तालवृन्तकै ॥७७॥

नैवेद्यं विविधैर्भक्ष्यैः भोज्यैः पक्कफलैस्तथा ।
पूजयित्वा नमस्कृत्वा जपेन्मन्त्रद्वयेनतः ( द्वयं ततः ) ॥७८॥
शतमष्टोत्तरं तत्र यथाशक्त्या जपेन्मनुः ।
ततः पुष्पाञ्जलिंदत्वा याहीयं(पश्चात) संप्रार्थयेत्ततः ॥७९॥
युवा ( पुचा ) वग्रहमनुष्याणां सर्वेषांगृहमेधिनाम् ।
दासीदास स्वरूपेण परिचर्य्या च सर्वदा ॥८०॥
आवयोः सर्वकार्येषु सर्वदेशेषुचैवहि ।
परिचर्य्यास्तुपुयोयोपादाज्यं (?) युवयोः सहः ॥८१॥
एवं सम्प्रार्थयेद्देवं ईश्वरंचाग्रदम्पती (?)
नमस्कृत्वा (त्य) पुनस्तत्र होमकर्मसमारभेत् ॥८२॥
अभेयवंश्यातु उहश्चमेरायत्रतुदम्पती ।
गृहप्रवेशांगभूतं होमं कुर्य्यादशेषतः ॥८३॥
विवाहाग्निमुपस्थाप्य चेत्थं कुर्यादशेषतः ।
अतः प्रजाजनमितिऋग्भिश्च तिसृभिर्घृतम् ॥८४॥
हुत्वाथमार्जयित्वाद्यै रभिप्राशनमुच्यते ।
आज्ययोपेणवाभक्तिहृद्यो शेतेपरस्परम् (?) ॥८५॥
ततः स्विष्टकृतं हुत्वाहोमशेषं समाचरेत् ।
ब्राह्मणान्भोजयेत्तेषामाशीर्भिरभिनन्दितः ॥८६॥
वधूवस्त्रैन्ततांते (?) तु दद्याद्विप्राय दक्षिणाम् ।
नमनतिल (?) सूक्तेन आशीर्भिरभिनन्दयेत् ॥८७॥
तत्र पाकं वितांते तु केचिदिच्छन्ति सूरयः ।
महाव्याहृतयस्तत्र होमंकुर्य्याद्विधानतः ॥८८॥

सदास्तान्ब्राह्मणांस्तत्र पूजयेच्छक्तितोनरः ।
ब्राह्म एव यं ब्राह्मणं सत्रं विशेषेण प्रपूजयेत् ॥८६॥
हरिं सम्पूजयेत्तत्र भक्त्या सम्यग्विधानतः ।
भोजयित्वा तु तं भक्त्या नमस्कृत्य विसर्जयेत् ॥६०॥
पाणिग्रहणप्रभृतात ( ? ) संगृह्याग्निमर्चयेत् ।
सायम्प्रातश्चजुहुयाद्यावज्जीवं समाहित ॥६१॥
स्वयमेव तु दातव्यं पतिस्त्वापुत्रमेव वा ।
कुमारीम्वाप्य(स्य) शिष्यो वा भृत्विग्वा(ऋत्विजं) शुभलक्षण
आपत्काले तु सम्प्राप्ते समिदारोपणंस्मृतम् ।
स्मृतंहुत्वायाज्याहुती मेकालय्यतादे (?) ऋचातथा ॥६३॥
व्रते तस्मिन्समाप्ते तु पुनरायोपणं ( पोपणं ) स्मृतम् ।
आरण्यमेवसम्प्राप्य जुहुयाद्धव्यवाहनम् ॥६४॥
विवाहान्यनमध्ये (?) तु नाशिते हव्यवाहने ।
धेनुं दत्वा च विप्राय पुनराधानमाचरेत् ॥६५॥
अश्मनारोहणञ्चैव परिणायनमेव च ।
पादाताश्म (?) वापि सर्पमप्रसमाचरेत् ॥६६॥
आतारकोदयान्तस्थित्वा नित्यहोमं समाचरेत् ।
विवाहाहुतयश्चैवलाजाहुतय एव च ॥६७॥
ना(आ)हुतयश्चैवतस्मिन्तस्मिन्नारोहणादिकम् ।
अन्योन्यानन्निर्वपण (?) भर्तायस्य च सोदरा ॥६८॥
पर्वण्यतिक्रमे वापि कालातिक्रमणन्तथा ।
सीमातिक्रमणेचैव केशकीटादि दूषिते ॥६६॥

प्रायश्चित्तादि दर्तिहि (?) होतव्यात्र श्रुवेण वै ।
तदभावे (तु) होतव्यं समिद्भिर्वातिलैः यवैः ॥१००॥
अन्योन्यस्यशतेरिष्टंद्रव्यंदेस्त्विष्टकृतं हुवेत् ( ? ) ।
विदानिरूप्रवेदा हि इत्येकादेवभित्यर्चम् (?) ॥१०१॥
योऽग्निदेववीतये कुचित्सुन (?) इत्यृ चा ।
आमानो (?) अस्मित्यथा जुहुयादाज्यमेव च ॥१०२॥
प्रायश्चित्ताद्याहुतयोहोतव्या तत्र कर्मणि ।
अतिक्रमे प्रतिपन्नं (?) पुराधानं तथा चरेत् ॥१०३॥
सूतके मृतके होममनेनैव तु कारयेत् ।
एवं होमं प्रकुर्वीत सायं प्रातः सदागृही ॥१०४॥
पक्षान्तंजुहुयादिष्ट (?) चरुणादत्त सत्तमः ।
अग्निमग्नि च सोमाभ्यां इन्द्राग्निभ्यां शशिक्षयम् ॥१०५॥
सायम्प्रातश्चजुहुयादग्निहोत्रमतन्द्रितः ।
निर्वपेत्यथयज्ञाश्च विधिना प्रत्यहं गृही ॥१०६॥
ऋतौ तु प्रथमेप्राप्ते गर्भाधानं समाचरेत् ।
रजोदर्शनमारभ्य त्रिरात्रं न स्पृशेत्स्वयम् ॥१०७॥
चतुर्थेऽन्हि (च)सम्प्राप्ते स्नात्वाशुद्धाभवेत्तु सा ।
कृत्वास्वरूपयनंतस्याः (?) पूजयेत्पुरुषोत्तमम् ॥१०८॥
प्रातरुत्थायासने हुत्वा तस्मिन्होमंसमाचरेत् ।
विष्णुर्योतिनमेश इति पादक्रमेण तु ॥१०९॥
ब्राह्मणान्भोजयेत्पश्चादाशीर्भिरभिनन्दितः ।
तान्तुस्वलंकृतां क्षौमां गच्छेद्युग्मासुरात्रिषु ॥११०॥

षोडश निशास्तासामाद्यास्त्रिस्रस्तु वर्जयेत् ।
पर्वसु ब्रह्मचारी स्यात्तयाचाद्य न्निषु तु ( (द्वि ) ॥१११॥
व्रतोपवासदिवसे सूतके मृतकेऽपि वा ।
शुभलग्ने शुभदिने चन्द्रताराबलान्विते ॥११२॥
सकृद्गच्छेत्स्त्रियं मौनी पुत्रग्रहणा (काङ्क्षया) न्निरीक्षणे ।
एवमेव (?) सूतके मृतकेऽपिवा मत्येशुभदिने ॥११३॥
चन्द्रताराबलान्विते सयुक्त पुनर्वैपनयेत्सुधी ।
तृतीये गर्भमासे तु कुर्यात्पुंसवन तत ।
उपोषितस्तुगर्भिण्यामिज्यार्थे तु प्रयोनयेत् ॥११४॥
पूर्वाह्णे सूर्योदयात्पूर्वं स्नात्वास्वस्तिवाचनमाचरेत् ।
प्रातरौपासन हुत्वा तस्मिन्होम समाचरेत् ॥११५॥
स्नपयित्वाचरेत्तत्र इध्माघ्यानादिकंचरेत् ।
अपरावाज्यभागौ तु हुत्वा परचाग्र्य तथा ॥११६॥
प्राजापत्येनमन्त्रेण जुहुयादाज्यमयुतम् ।
समानरपत्यावर्णी गोदधे प्रसूतेन तु ॥११७॥
प्राग्रयतो स्त्रियमत्ताविशार धृतमयुतम् ।
दक्षिणस्या नासिकाया निनासौषधीरसम् (?)॥११८॥
शनुकरो (?) तु चैतस्या मन्त्राभ्या सुसमाहित ।
प्रजावज्जीवपुत्राभ्या मन्त्राभ्यात्तिसमाचरेत ॥११९॥
इति सुशिवतोमे ति (?) हृदय समुपस्पृशेत् ।
तत स्विष्टकृद्हुत्वाहोमशेष समापयेत् ॥१२०॥

चतुर्थे मासिगर्भस्थं सीमन्तोन्नयनं चरेत् ।
षष्ठेऽष्टमेवाकुर्वीत शुक्लपक्षे शुभेदिने ॥१२१॥
नान्दी श्राद्धं तु पूर्वाण्हे कुर्वीत पितृदेवताः ।
स्नात्वा पराण्हे कुर्वीत स्वस्तिवाचनपूर्वकम् ॥१२२॥
सुपुष्प मण्डपे रम्ये वितानध्वज शोभिते ।
पजयेद्विधिवद्विष्णुं सुगन्धकुसुमैः शुभैः ॥१२३॥
वस्त्रालङ्कारभूषाद्यैः धूपदीपनिवेदनैः ।
फलैश्च भक्ष्यभोज्यैश्च विवधै स्विष्टकारतैः ॥१२४ ॥
नाना पक्षैः सुहृद्यै (१) श्च पूजयेद्धितपूर्वकम् ।
तौ दम्पती नमस्कृत्य लक्ष्म्या युक्तं सनातनम् ॥१२५॥
तस्यैव पुरतः पश्चात्संस्तीर्य्यानुडुहस्त्वं (?) ।
तस्मिन्समुपविष्टौ तु आतर्होमः समाचरेत् ॥१२६॥
तस्मिन्नग्नौ तु जुहुयादाज्यमिध्यादिपूर्वकम् ।
धाता धातु न इतिद्वाभ्यां राकाभिमित्रस्वा (?) ॥१२७॥
नेज्यमेचेतिसृभिः (?) प्रजापतित्सित्रमृचा तथा ।
हुत्वाशिलालुलशेन (?) त्रिशुल्क सलिलेन तु ॥१२८॥
त्रिभिश्चकुशापिजलैर्जपेद्भूर्भुवः (?) स्वरोमिति ।
पलपासीमे (?) तु मध्ये तु त्रिवारं सम्यगुच्चरेत् ॥१२९॥
नामभिः कीर्त्तनैर्दिव्यैः देवदेवं जनार्दनम् ।
समाप्य होमशेषन्तु ब्राह्मणान्भोजयेत्सुधीः ॥१३०॥
ब्रह्मस्यब्राह्मणा (?) यत्र दद्यादेकं शुभेदिने ।

मन्त्रसंस्कृतसंस्कार्यां सीमन्तादिक्रियातन ।
पूर्णगर्भे प्रसूतेन तत्सर्वं संस्कृतम्भवेत् ॥१३१॥

इति श्री वसिष्ठस्मृतौ गर्भाधानादि पुंसवनादि सीमन्तो-
न्नयनकथनं नाम चतुर्थोऽध्यायः ॥४॥

---

## अथ पञ्चमोऽध्यायः

### स्त्रीधर्मवर्णनम्

**श्री वसिष्ठ उवाच**

अधुना सम्प्रवक्ष्यामि स्त्रीणां धर्मं सनातनम् ।
शीलमेव तु नारीणां प्रधानं धर्म उच्यते ॥ १ ॥
शीलभङ्गेन नारीणां यमलोकः सुदारुणम् ।
पतिर्हि दैवतं नार्य्याः पतिर्बन्धुः पतिर्गतिः ॥ २ ॥
तस्याज्ञा लङ्घयित्वैव नारी नरकमाप्नुयात् ।
नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं नाप्युपोषणम् ॥ ३ ॥
पतिशुश्रूषया तासां स्वर्गमेव विधीयते ।
भोजनं शयनं निद्रा भर्त्तुः पश्चाद्विधीयते ॥ ४ ॥
उत्थाने (न) तु पुनस्तस्याः पूर्वमेव विधीयते ।
पतिं या नाभिचरति मनोवाक्कायसंयता ॥ ५ ॥
सा भर्त्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ।
दक्षा हृष्टमना सुवशा च सदा परपराङ्मुखी ॥ ६ ॥

सपुत्रा तस्करा (छायेवानुगता) शुद्धा सदाभर्त्तृपरायणा।
श्वश्रूश्वशुरयोः पादवन्दनं प्रत्यहंचरेत् ॥ ७ ॥
गृहं नित्यमलङ्कुर्यादुपलेपादिरंजनैः।
अभ्यञ्जनमलङ्कारगन्धपुष्पादिधारणम् ॥ ८ ॥
मिष्टान्नभोजनं गानंत्यजेत्प्रोपितभर्त्तृका।
स्वतन्त्रपुरुपाणां च प्रलापं सम्प्रचोदनम् ॥ ६ ॥
परवेश्मनिवासं (सो) वा पुंसांस्त्रीभिश्चसङ्गमम्।
द्वारोपवेशसंस्पृष्टं गवाक्षावेक्षणं तथा ॥१०॥
केशवस्त्रादिविन्यासं पुरुपाणां निरीक्षणम्।
ताम्वूलगन्धपुष्पादिग्रहणं पुरुपान्तरात् ॥११॥
वादित्रगीतनृत्याद्यमुत्सवानांनिरीक्षणम्।
स्त्रीकुर्यात्पतिना सार्द्धं सभायाञ्चप्रवेशनम्।
अपावृतास्यं हास्यं च पानं दुर्जनसङ्गमम्।
पाशाविशेपणंचैव दूपणं कुलयेपिताम् ॥१३॥
अनूढां तु पिता रक्षेद्भर्त्ता तु तदनन्तरम्।
पते(त्यु)रुर्ध्वं च पुत्रश्च तदभावेश(स)ना(जात)भयः ॥१४॥
वांधवाश्च ततो राजा नस्वात(न्त्र्यंस्त्रियःक्वचित्) किंचित्स्त्रियां
हीनायुस्याद्भवेदीवीगर्हितासाभवेद्ध्रुवम् (?) ॥१५॥
भर्तुःप्रियहिते युक्ता सदाचारा जितेन्द्रिया।
इह कीर्त्तिमवाप्नोति गतिम्प्राप्नोत्यनुत्तमाम् ॥१६॥
स्त्रियाभर्त्तुर्वचः कार्यमेप धर्मः सनातनः।
भिन्नमर्यादवृत्तिश्च न तु तस्यानुकूलता ॥१७॥

भर्तुं भ्रातापितृज्ञ्य श्वशु-श्वशुर-देवरैः ।
पुत्रैश्च पूजनीया स्त्री भूषणाच्छादनाशनैः ॥१८॥
परमापद्यपि सदा मनोवाक्कायकर्मभिः ।
नान्येपतिर्न्पुरीवात्तया (?) कुर्वतश्च पतेत् ॥१६॥
वयसमु(वचपा तु) षोडशादूर्ध्वं पुत्रवापिन मस्वरेत् ।
अन्येषागात्रसस्पर्शान्महाहानिर्भवस्त्रिय ॥२०॥
मैथुन हसन स्नेहसलाप गात्रमगमम् ॥
एकशय्याशन वपुषोर्णे (स्वपुत्रणापि)वापि हानिदम् ॥२१॥
अभ्यग गात्र ससर्श ( र्शं ) पुत्र वापि न योजयेत् ।
भर्त्तुरन्यनचत्रयात्सुन्दरोऽ(पि)(पश्मिनियो)मवेक्वचित् ॥२२॥
भर्त्तु गरोपितो निद्रां न भ्र्याच्छुणुयान्न च ।
पितर मातर पुत्र भ्रातर वा गुरु तथा ॥२३॥
धिद्वेष (निद्विपन्त) त्यजेद्भर्त्तु (?)यथाभर्त्तुस्तथा भवन् ।
ताम्बूल दन्तकाष्ठ च स्नान मज्जनभूषणे ॥२४॥
स्पर्शन चैव सर्वत्र त्यजेत्पुष्पवती सती ।
निरात्रतु हि न स्नायात् तत शुद्धाभवत्तु सा ॥२५॥
शुद्धाभर्त्तु (सा च) श्चतुर्थेऽन्हि स्नानेन स्त्री रजस्वला ।
दैवकर्मणि पित्रे च चतुर्थेऽहनिशुध्यति ॥२६॥
ऋतुस्नाता तु या नारी सन्निधौ नोपगच्छति ।
घोरायांभ्रूणहत्यायां युज्यते नात्र सशय ॥२७॥
अर्थधाण (?)शरीर च भर्त्तार या हि वञ्चति ।
युगकोटिसहस्राणि पच्यते नरकाग्निना ॥२८॥

पुरतो याचमानं च भर्त्तारं न ददाति या ।
कल्पकोटिसहस्राणि विष्ठायां जायते क्रिमिः ॥२६॥
अदुष्टां विनतां भार्य्यां यौवने यः परित्यजेत् ।
सप्तजन्म भवेत् स्त्रीत्वं वैधव्यं च पुनः पुनः ॥३०॥
वृद्धोव्याधियुतोवापि दरिद्रो वा कुरूपवान् ।
कोऽपिवापि भवेद्भर्तातन्देवमिव पूजयेत् ॥३१॥
भर्त्तुः पुरस्तादुत्थाय कृते (त) शौचं (च) क्रियादिभिः ।
दंतधावनपूर्वं तु कंठस्नानं समाचरेत् ॥३१॥
हरिद्रासहितेनैव स्नात्वा मुक्ताण्यपावृता (शुक्लाम्बरावृता) ।
केशप्रसाधने (नं) कृत्वा वध्वा कवरिकांकुचैः ॥३३॥
अलंकृत्वाऽथ स्वांगं वै गंधपुष्पादिधारणैः ।
श्रीशं नत्वा गुरून्नत्वा पश्चात्कर्मसमाचरेत् ॥३४॥
दासी (दाससुतान्) दशतनो भृत्यांस्तत्र कर्मसु योजयेत् ।
अलंकुर्वीत हर्म्याणि सेचनैरंगवल्लिभिः ॥३५॥
अर्चयेज्जगतामीशं गंधपुष्पफलोदकैः ।
यज्ञार्थन्तु पचेदन्नमात्मार्थं न कदाचन ॥३६॥
शुचौ देशेवहन्यामुधान्यं (?) प्रयतवाक्शुचिः ।
त्रिवारमेवहन्यानु (?) तंऽल्तन्कुक्कवत्तरं ॥३७॥
भांडानां सेचनं (नं) कुर्यात्पंच (गव्य)यं च सुकर्मसु ॥
शौचाचमनस्नानार्थभांडानि च यदिन्यसेत् ॥३८॥
जलपूर्णानि भांडानि सेचनार्थानि यानि च ।
वेश्मन्येव च संस्थाप्यनैवरान् (?) गृह्यतेकचित् ॥३६॥

पच(च)नार्थानिभांडानि नवान्यैव तु नित्यशः ।
अलाभेक्षाल्लनंकृत्वा दग्ध्वा(ग्ध्वा)चे(च)शक्तितै(श्रुणे)स्मृगैः ४०
पुनःप्रक्षाल्ययचनं (?) कुर्यान्तेपुसुरेश्मसु ।
भांडातरंजलंनीत्वा शोधयित्वा शुनासमी ॥४१॥
त्रिवारंशोधयित्वाऽत्य जलकुम्भे प्रपूरयेत ।
ततस्थालायूपुनान्मारं (?) च प्रकल्पयेत् ॥४२॥
क्षालयित्वा करैर्भांडं (?) पुष्टौ प्रक्षालयेत्ततः ।
तंडुलानतक्षालयेत्पश्चात्(?)त्रिचतुर्वायता(रुकं)सदा ॥४३॥
संवंशोध्यतंडुलांश्चाद्भि (?)पश्चात्पचनभावहेत्(मारभेत्) ।
आरनालं न कर्तव्यमापद्यपि कदाचन ॥४४॥
आरनाले हि विप्राणा सुरानुत्तम (?) संशयः ॥
केशानां रंजनार्थायति(ल) निमत (तैलेन) (?) संयुतं ॥४५॥
केशाया (न) (?) (प्र) क्षाल्येन्नित्यंत्र रस मेवया ।
माषमुद्गादिचूर्णं वा तिन्तिणीफलमेवया ॥४६॥
कस्तूरी घनसारंवा चन्दनाद्यं प्रकल्पयेत् ।
शाल मूलक्षुमर (?) वद्रन रंडयेत् ॥४७॥
त्रिवारं क्षाल्येत्पश्चात्सम्यग्यन्नासि (?) योजयेत ।
अग्निकुण्डमंडलं (?) कृत्वावन्हिकाष्ठै प्रदीपयेत् ॥४८॥
अमेध्यं गंधकाष्ठानि कष्टकानि स्फुलिङ्गवात् ।
अंतप्राण्युपपन्नानि (?) सोच्छिष्टानि विसर्जयेत् ॥४९॥
केशलेपादि संयुक्तान्यमेध्य स्पर्शनानिच ।
चितिस्पृष्ट (?) काष्ठा पूयोपकरणानिच ॥५०॥

चर्मास्थि (?) समवेतामितपरीपं शुक्लमेव च ।
उच्छिष्टशुक्ल (क्त) पर्णानि न वन्हौ विनियोजयेत् ॥५१
शुष्कगव्यं पुरीषञ्च शुद्धमग्नौ प्रदीपयेत् ।
महिषाश्वखरोष्ट्रादी(णाम्)न्पश्वादीं(नाम्)श्चविवर्जयेत्॥५२
विभीतकं तथा शिग्रु कार्पासं रेणुकन्तथा ।
खर्जूरं तालहिन्तालं केतकी शणशाल्मलीन् ॥५३॥
कपित्थं पैलवं चैव तिड़कं तापसन्तथा ।
खर्जूरी वदरी मोचा भल्लातक कपिञ्जलौ ॥५४॥
तुलसी राजवृक्षौ च मध्ये दग्धानि यानि च ।
एवमादीनि काष्ठानि न वन्हौ विनिवेदयेत् ॥५५॥
तापयेन्नीलवृतेन वन्हि वस्त्रेण नैव च ।
विष्णोर्निवेदनार्थाय रा(पा)चयेदोनादिक(थे)ञ्च विशेषतः ॥
स्निग्धंपथ्यं तथा शुद्धं शुभ्रंरुच्यं मनोहरम् ।
थावपेदोदनाद्यं(पाचये दौदनाद्यं)तु चायता नियतेन्द्रियः ॥
लवणं गुड़ (?) तैलाप्लगुड़ान्संग्रहेतथा ।
मरीच लवणाम्लाज्य (?) गुड़ सूपादिसंयुतम् ॥५८॥
पाचयेत्कन्दमूलानि भक्ष्यं शुद्धं मनोहरम् ।
अन्नञ्च पाचयित्वैव सुधीर्विष्णुंनिवेदयेत् ॥५९॥
अतिथिं च गुरुञ्चैव भोजयेत्पतिः ( स्वसुतान्ततः ) ।
स्वभर्त्तारं भोजयित्वा स्वयं भुञ्जीत योषिता ६०॥
सन्तोषं परमास्थाय पतिं सन्तोषयेद् गुणैः ।
सदा धर्मपथे युक्ता सदा भर्तृपरायणा ॥६१॥

परस्य न वदेत्किञ्चित्सदा मधुरवाग्भवेत् ।
यथोत्पन्नेन द्रव्येण सतुष्टा विगतज्वरा ॥६२॥
परमापद्गता वापि भर्त्तारं न निषेधयेत् ।
भिक्षां च भिक्षवे दद्यादन्नं पूर्वं तु(?) ह्मविना ॥६३॥
न च संभाषयेत्किञ्चिद्दुर्दुष्टकथनादिभि ।
अल्प(?)शायामद्य शयीत गंधपुष्पादि वर्जिता ६४॥
भवेत्पत्युत्पथि कृत्वा न च सन्ताप कर्षिता ।
मरणेचाति कीर्त्तिश्चसमप्रोति (हि) परां गतिम् ॥६५॥
आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ।
मृतेम्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता ॥६६॥
साध्वीनामेप नारीणामग्निप्रयेत (?) नावृत्तो ।
नान्यो धर्मोऽस्ति विज्ञेयो मृते भर्त्तरि कुत्रचित् ॥६७॥
तिस्रः कोटयोऽर्ध कोटीश्च यानि रोमाणि तानिच ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥६८॥
ब्रह्मघ्नोवा सुरापोवा मित्रघ्नं वापि दुष्कृतिम् ।
पतिं पुनाति नारी (च) पतिं यानुमृता भवेत् ॥६९॥
यावद्भर्त्तारमालिङ्ग्य मृतमग्नौ प्रवेशयेत् ।
सामुत्रलोके भान्यौति (च सुख)दिवि सम्पूज्यते सुरै ॥७०॥
यदि प्रविष्टं नरकं बद्ध्वा पाशै सुदारुणै ।
सम्प्राप्य यातनास्थानं गृहीतो यमकिंकरै ॥७१॥

तिष्ठंगे (न्वा) विवशोदीनो वेष्टमानः स्वकर्म्मभिः।
व्यालग्राही यथा सर्पं वलादुद्धरते विलात् ॥७२॥
तद्वद्भर्त्तारमादाय दिवं याति ततो वलात्।
तत्र सा भुत्रपरमा स्तूयमानाप्सरोगणैः ॥७३॥
मोदते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश।
पृथक्‌चितिं समारुह्य नविप्रा (?) गन्तुमर्हति ॥७४॥
इतरेषां नुवतां (युवतीनाम्) स्त्रीधर्मोऽथ परः स्मृतः।
दुर्वृत्तं तारयेत्साध्वी (?) सद्वृत्तयवमन्यगात् ॥७५॥
भर्त्ता यत्पदमाप्नोति तेन तत्पदमश्नुते।
गर्भिणी वा विदेशस्था सूतिका वा भवेद्यदि ॥७६॥
नचानुगमनम्भर्तुर्ब्रह्मचर्यव्रते स्थिता।
शिरसोमुण्डनं कृत्वा सर्व(वस्त्रालङ्कार)विवर्जिता ॥७७॥
एक भुक्त्वाह्यधः स्नायी (शा) स्नानं त्रिपवर्णंचरेत्।
चान्द्रायणे नयेत्कालं कृच्छ्रेण विजितेन्द्रिया ॥७८॥
नित्यमभ्यर्चयेद्देवं वासुदेवं सनातनम्।
तत्वज्ञान समायुक्ता विरक्ता विष(येष्वतः) यौधतः ॥७९॥
विशुद्धा विजितक्रोधा कामलोभविवर्जिता।
जितेन्द्रिया शुभाचारा ह्यव्याज(?)नियताशना ॥८०॥
त्रिकालमर्चयेन्नित्यं वासुदेवं सनातनम्।
ध्यायञ्जपन्नमस्कुर्वन् कीर्त्तयन्नामभिः शुभैः ॥८१॥
एवं व्रतसमाचारा नारायणपरायणा।
सापि भर्त्तारमुद्धृत्य प्रयातिम् परमांगति ॥८२॥

मृते भर्त्तरि नारीणां ब्रह्मचर्यं यथोक्त(वन)यान् ।
अग्निप्रवेशन वापिन्यना (?) दम्नानिर्मितं ॥४३॥

इति वसिष्ठस्मृतौ पातिव्रतधर्मवर्णननाम पञ्चमोऽध्याय

---

## अथ षष्ठोऽध्यायः

### नित्यनैमित्तिकविधिवर्णनम्

ऋषय ऊचु ।

भगवन्ब्रूहि तत्त्वेन विष्णोराराधनम्परम् ।
नित्यं नैमित्तिकं यत्तन्मन्त्राणां च विधिं तथा ॥१॥

श्री वसिष्ठ उवाच ।

शृणुध्वमृषय सर्वे हरिपूजाविधिम्परा ।
नित्यमाराधनमादौ वक्ष्यामि मुनिसत्तमा ॥२॥
ब्राह्मे मुहूर्त्ते(र्तो) उत्थाय मुखम्प्रक्षाल्य वाग्यत ।
आचम्य प्रयतोभूत्वा जपेद्गुरुपरम्पराम् ॥३॥
ध्यात्वा(विष्णुश्च)कल्मनसाध्यात्वा प्रणम्य च पुन पुन ।
योगध्यानविधानेन ध्यायेद्विष्णुमतन्द्रित ॥४॥
सनसेत्यादि मन्त्रेण समुत्थाय प्रणम्य च ।
सकीर्त्य नामभिर्दिव्यै स्नात्वा स्तुतिभिरेव वा ॥५॥
गच्छेद् ग्रामादुदग्दिक् पश्चाद् वाग्यतो नियतेन्द्रिय ।
नैर्ऋत्यां पश्चिमे वाथ शुद्धदेशे च निर्जने ॥६॥

शूद्रश्च पाक रोगी च नगाक्षुपनकादयः।
पाखण्डी च विकर्म्मी च कुष्ठी च भ्रूणहातथा ॥४६॥
यत्रैतेन्वेपयन्नित्यं(निवसन्तीह) श्राद्धकालंवि(स)वर्ज्जयेत्।
यवंधान्यश्चगोधूममुद्गा वा प्रशर्क्करा ॥५०॥
तुषहीनास्तथा माषाः श्राद्धकर्मणि योजयेत्।
श्राद्धेषु नागरं देयं लवणं सैन्धवन्तथा ॥५१॥
गव्यन्तु पायसं देयं पितृणां दत्तमक्षयम्।
कूष्माण्डंवर्ज्जयेत शुद्धमन्नंह चिन्न(प्यन्त)ण्डुलीयकम् ।५२
गन्धारिकापटोलानि श्राद्धकर्मणिवर्जयेत्।
शुद्धमन्नं हविष्यान्नं विष्णुसान्निध्यभोजनम् ॥५३॥
अन्नाभावे तु कर्त्तव्यं शाकमूलफलेन वा।
अर्घ्यार्थमाहरेत्पात्रं सजलं सागरोद्भवम् ॥५४॥
सौवर्णं राजतं ताम्रं तथा खड्गोद्भवं(?)शुभम्।
प्रशस्तं दारुणं वावि(?)पात्रं कुर्याद्विचक्षणः ॥५५॥
मृत्स्ना तथाकांस्यं मारकूटादि सम्भवैः।
त्रपुसीसकलोहैश्च अर्घ्यपात्रे विसर्ज्जयेत् ॥५६॥
कायवाधामनार्त्तश्च(?) वेगयाधाविसर्ज्जितः।
मनोवाक्कायशौची च श्रद्धयाश्राद्धदोभवेत् ॥५६॥
क्षान्तोदान्तः शुचिः स्नातो धौतवासाजितेन्द्रियः।
श्रद्धावाञ्छ्राद्धकृन्निष्ठो विप्रागमनकांक्षया ॥५७॥
अपराह्णे समभ्यर्च्य स्वागते कामके सदा।
पवित्रपाणिराचम्य आसनेषूपवेशयेत् ॥५८॥

दत्वार्घ्यं क्षाल्येत्पादावाचम्यक्षाल्येत्पुन ।
पूनयेत्पुनराचम्यविप्राणाभ्य(म)-तरे (?) दिशेत् ॥८६॥
(स्यान्) स्वात् स्वागततइति न् यानविरवदवा पितृ-न्तथा।
सुस्वागत च ते ब्रूयुस्तिलैरवकिर-मयम् ॥६०॥
दैवे युग्माथथाशक्ति पित्र्य चैव यथाविधि।
प्राङ्मुरवास्तेसदादैव पित्र्ये कार्यो(र्या) उदङ्मुखा ॥६१॥
श्राद्धाहास्ते उपविशाश्च न स्पृशेयु परस्परम्।
महायोगान्यथावुयु पितृणामे तदीप्सितम् ॥२०॥
अग्निष्वात्तारय(दय) सर्वे रक्षार्थं पितृगणाह्वये।
तिलान्वाशपपान पीतान्पिहा(?)पितृगणै सह ॥६३॥
दक्षिणस्त्रिदेश तु मागग्रेषु कुशेषु च।
तृणमादध्य सहासीन तिलै सह कुशात्रयम् ॥६४॥
प्राणायाममत कुर्याद् गायत्रीस्मरणन्तथा।
श्राद्धकर्तासि वै ब्रूयात् विप्रैवाच्य कुरुष्व वै ॥६५॥
दभार्चवामने दद्यापितृणा द्विगुण तथा।
सपवैश्च यवै दभा सपवैश्च तिलै पितृन् ॥६६॥
दद्याना दक्षिणदद्यात्पितृणामप्रदक्षिण।
नामगोत्र स्वधास्म स्वागत ब्राह्मणस्य च ॥६७॥
सङ्कल्पामनग्नानु ततार्घ्यं च समारभेत्।
पाद्याद्यमासन गोत्र मधं पिण्डावनेजने ॥६८॥
गात्राणां चरकमणा पृष्वामक्षयावोस्तथा(?)।
गोत्रानाशहन प्राप्त गोत्रस्य सङ्कल्प उच्यते ॥६६॥

अर्घ्यपात्रं समानीय कुशतोयसमन्वितः ।
शन्नो देवी पयः क्षिप्त्वा यवोऽसीति यवंक्षिपेत् ॥७०॥
गन्धपुष्पादिसम्पूर्णः प्रश्नं कुर्याद्विचक्षणः ।
परिपूर्णं च त इत्युक्त्वा विश्वेदेवान्समाव्हयेत् ॥७१॥
विश्वेदेवास आगत शृणुतामपिम ऽह्वं(?) ।
आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ॥७२॥
यो यत्रावाहिता(विहिता) श्राद्धे सावधाना भवन्तु ते ।
मन्त्रेणानेन वै तत्र अर्घ्यं विप्रकरे न्यसेत् ॥७३॥
ततस्तुक्रमयोगेनपित्र्यर्घ्यन्तु नियोजयेत् ।
कुशमम्बुतिलैर्युक्तमायान्तु पितरस्तथा ॥७४॥
तिलोऽसिपितृदैवत्योर्जपेन्मन्त्रान्क्षिपेत्तिलान् ।
शन्नोदेवीपयः क्षिप्त्वा शेषं पूर्ववदाचरेत् ॥७५॥
स्वगोत्रनामशर्मेति उशन्तस्त्वेति वै क्षिपेत् ।
आवाहयेत्पितॄन्भक्त्याजपेदायन्तुनः पुनः ॥७६॥
पितृवत्पूजनंकृत्वामन्त्रेणैव प्रयत्नतः ।
देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥
नमः स्वाहायै स्वधायै नित्यमेव भवन्तु मां ॥७७॥

या दिव्या आप पयसा भूर्यान्तरिक्षा उतपार्थिवीर्या हिरण्यवर्णायज्ञियास्तान आपः शिवाः सः स्योना सुहृता भवन्तु एपते अर्घ्य इति प्रथमे पात्रे सस्रवान्समवनीयं दत्वार्घ्यम्पूजयेत् भक्त्यागन्धपुष्पानुलेपनैः ।

तदर्धलभन कुर्यात्कर्ता भोक्ता तथैव च।
पितृभ्य स्थानमसीतिस्यु ऊीकुयान्न निदध्यादत्र ॥७८॥
अर्घ्यगन्धपुष्पदीप वासा च प्रदान सपविपितु पात्रं
दक्षिणाधो मुगन्यसेत ॥
यद्दे वाहेडनश्वस्याविरशुग्मि(भै) रापोनिमन्त्रितम्।
तेनान्नपाक सस्तुर्या याति पाकपवित्रताम् ॥७६॥
तेन मन्त्रण पानीयमन्नपाकन्तु सत्कृतम्।
सूर्यदृष्ट तु दृष्ट या तदन्न न पुनीमहे ॥८०॥
तदग्नौ करण कुर्यात्सगृह्यान्न घृताप्लुतम्।
अग्नौ कुयादनुज्ञात कुरुष्वति वदेद्द्विज ॥८१॥
सव्येन जुहुयात्तत्र अग्नौ करणमाहुतिम्।
साग्निकेऽअग्निकुण्डश्च निरग्निर्द्विज हस्तके ॥८२॥
अग्नौकरणमाहुत्या सव्येन जुहुयाद्धवि।
अग्निरेऽग्निकुण्डश्च निरग्निर्द्विजहस्तके ॥८३॥
विप्रहस्ते तथा काष्टे वडवास्यदनामुखे।
पाषाणचक्रनिर्भिन्ने वसेदप्सु च पावक ॥८४॥
अग्नौकरणशेषन्तु पित्रन्देवाश्च हूयते।
द्वाभ्या प्रणीयते यत्र निराशा पितरोगता ॥८५॥
मातामहपुयान्याद्ग्नौकरणमाहुतिम(तौ)।
निराशा पितरस्तस्य पैशाच श्राद्धमुच्यते ॥८६॥
श्राद्धपात्र समासाद्य विश्वदेवा प्रदीयताम्।
दत्त्वा तु पूर्वजपा पितृणा तदनन्तरम् ॥८७॥

जलान्नपानं गन्धादि पुष्पधूपास्तथैव च ।
देवपूर्व्वेणदातव्यं पितृपूर्वेण विसर्जयेत् ॥८८॥
कर्पूरं रामठञ्चै व मरीचं च तथागुड़ं ।
श्राद्धकर्मणिशस्तानि सैन्धवं त्रपुसी तथा ॥८६॥
भक्ष्य भोज्यं तथा पेयं यत्किञ्चित्पच्यतेगृहे ।
पतन्तिकणिका श्राद्धे नताः सम्मार्जयेद्बुधः ॥६०॥
उष्णं स्निग्धं च मधुरं तथान्यत्प्रीतिकारकम् ।
काशं पत्रं फलंतोयं पितृपूर्वन्नदापयेत् ॥६१॥
विना मासेन यः श्राद्धं कृतमप्यकृतम्भवेत् ।
क्रव्यादापितरोयस्मादलाभे पायसादिके ॥६२॥
इक्षुः पयो घृतं शालि मुद्गमापयवास्तथा ।
प्रसाधिकश्च शामाकान्गोधूमाश्चैवदापयेत् ॥६३॥
कूष्माण्डावालवृतांकापालक्यातण्डुलीयकम् ।
कुष्टान्नञ्च दग्धान्नं श्राद्धकर्म्मणिवर्ज्जयेत् ॥६४॥
कालशाकम्महाशाकं पड्भलोहामिषं मधु ।
आनन्त्यायोपकल्पन्ति जम्बीराणिविशेषतः ॥६५॥
यावदुष्णम्भवेदन्नं यावदश्नन्तिवाग्यतः ।
तावदश्नन्तिपितरः शेषान्नं राक्षसंविदुः ॥६६॥
तस्मादुष्णानिदेयानिस्निग्धानिमधुराणि च ।
प्राग्द्रव्याणि च देयानि विश्वेदेवान्ततः पितॄन ॥६७॥
दत्वान्नं पृथ्वीपात्रे इतः पात्राणिमंत्रितम् ।
इदं. विष्णुर्जपेन्मन्त्रं द्विजांगुष्टानियोजयेत् ॥६८॥

निरङ्गुष्ठं नु यच्छ्राद्धं बहिर्जानु चयत्कृतम् ।
अश्रद्धयाऽपि च यद्दत्तं सर्वं ज्ञेयं तदासुरम् ॥९९॥
भोजनं तमनयावद्भुक्त्वाचान्नं यथाविधि ।
यथासुखं जुषध्वं च इति वाच्यमनुष्ठिते ॥१००॥
भुञ्जानेष्वन्न(?)न प्राणस्थान्नं मौ(?)सुखम् ।
रक्षोघ्नीं च जपेन्मन्त्रं तिलांश्च विकिरेन्महीम् ॥१०१॥
स्वाध्यायं श्रावयेद्विप्रान्पुराणान्यखिलानि च ।
इन्द्राग्नी सोमसूक्तञ्च पावमानीस्तथैव च ॥१०२॥
पुरुषसूक्तं यजुषा पिण्डब्राह्मणसत्पथ ।
पितृस्तवं तु पञ्चैव गायत्री मधुब्राह्मणा ॥१०३॥
विप्राणामात्मनश्चापि पवित्रं जपन्ति ये ।
तत्सर्वं च जपेच्छ्राद्धे प्राणायामांस्तु कारयेत् ॥१०४॥
पितृवत्सानद्विजान् सर्वान् ज्ञात्वा तृप्तिमुपेत्य तत परम् ।
यूय तृप्ता तत पृच्छ्याशेषमन्याथमन्यथम् ॥१०५॥
स्वल्पमन्नमुपादाय निरीयाऽऽचम्य नाविणा ।
दैवपित्रान्तरे भूमौ मन्त्रेणानेन निक्षिपेत् ॥१०६॥
येषान्न पचते माता येषान्न पचते पिता ।
उच्छिष्टं ये नराऽश्नन्ति तेषां वै दत्तमक्षयम् ॥१०७॥
ततः आचमनं दद्यादनुज्ञातास्तु ये द्विजाः ।
कृताञ्जलिपुटा भूत्वा गायत्रीं च मधु जपेत् ॥१०८॥
मधुमन्त्रं समासाद्य अष्टाग पिण्ड उच्यते ।
[illegible] ॥१०९॥

चतुष्कोणन्तु विप्राणां त्रिकोणं क्षत्रियस्य च ।
मण्डलाकृतिर्वैश्यस्य शूद्रस्याभ्युक्षणंस्मृतम् ॥११०॥
न(म)लापकर्षणं सर्वं स्थापयेन्नैऋत्यांदिशि ।
वन्हिमादायतत्रैव निक्षिपेत्क(च)पुनर्निऋ तौ ॥१११॥
पितृरूपाश्च असुराः पिशाचा असुरास्तथा ।
तेषांवैरक्षणार्थायक्षिपेद्वन्हिन्तुनिऋ तौ ॥११२॥
यत्रात्पिण्डंप्रगृण्हीयात्प्रदद्यात्स्वयमेवहि ।
पूर्वन्तुविकरंदद्यात्कुशहीनंक्षिपेद्भुवि ॥११३॥
कपित्थैः श्रीफलैर्वापि पिण्डान्दद्यात्तुतत्समम् ।
विकरं दद्याद्दैवपित्र्यान्ते तु भुवि (क्षिपेत) ॥११४॥
पिण्डमासनदर्भाग्रे दक्षिणे च तथोत्तरे ।
विकरं दद्यात्तत्र दातव्यं उच्छिष्टे न कदाचन ॥११५॥
उच्छिष्टन्तु यदादद्याद्विकरंतु द्विजातिभिः ।
पतन्तिविकरस्यापिषण्मासोच्छिष्टभोजने ॥११६॥
यदन्नं पिण्डदाने तु तदन्नं विकरेन्यसेत् ।
क्षिपेत्पिण्डंजलाग्नौ वा विकरन्तत्रवैक्षिपेत् ॥११७॥
काम्यके विश्वे दद्यात्क्षयाहे पिण्डमुत्तरम् ।
विकरेण विनाश्राद्धं पुनः प्रेतत्वं जायते ॥११८॥
विकरं भूमिदातव्यंपडाङ्गुल्येनमर्च्चयेत्(?) ।
कुशपुष्पतिलैर्युक्तं गाथातत्रमुदाहृतम् ॥११६॥
येषां न माता न पिता न वन्धुर्नवान्नदः ।

लभ्यन्ते (भते) श्राद्धदानेन पितॄंस्तद्गतमानसः ।
सुप्रोक्षिते ततः पिण्डान्द्वारि दद्यात्सकृत्सकृत ॥१३०॥

तथा पुष्पाक्षतश्चैवाक्षय्योदकमेव(?) च ।
सतिलं नामगोत्रस्तु दद्याच्छक्त्या तु दक्षिणाम् ॥१३१॥

प्राचीनावीतिना भूत्वा पितृगुर्वां तु कल्पयेत् ।
पूर्वेण च पितॄन्दद्याद्विश्वेदेवान्तथान्तरे ॥१३२॥

असुराःपितृरूपेण अन्न सन्तिमान च ।
तेषान्वै रक्षणार्थाय पश्चाद्विश्वेदवान्विसर्ज्जयेत् ॥१३३॥

न्यस्तपूर्व्वन्तु यत्पात्रं कृत्वा चैवाधोमुखम् ।
तत्रापि कुशमं गृह्य पिण्डान्तद्वं(?) प्रदापयेत् ॥१३४॥

तदुत्थानं ततः कुर्यात्पितृपात्राभितं पुनः ।
ऊर्ज्जदानं पितॄणां च आचम्य प्रयतः शुचिः ॥१३५॥

ततस्तु दक्षिणां दद्यात्ब्राह्मणेभ्यो यथाविधि ।
आशिषः प्रतिगृह्णीयाद्द्विजेभ्यः प्राङ्मुखः सदा ॥१३६॥

अघोराः पितरः सन्तु स ब्रूयु(?)पुनर्द्विजः ।
गोत्रन्नोवर्द्धन्तां तथेत्युक्त्वातुते पुनः ॥१३७॥

दातारोनोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ।
श्रद्धा च नो माव्यगमद्बहु देयं च नोऽस्त्विति ॥१३८॥

अतिथींश्च लभेमहि लभध्वंयाचितारश्च नः ।
सन्तु मास्म याचेत्कथञ्चन मा याचेथाः ॥१३६॥

जीवतो वाक्यकरणेमृते च भूरि भोजने।
ऋणसंशोधनार्थायत्रिभिरेव सुतः सुतः ॥१४७॥
उच्छिष्ट माज्र्जनं यावन्न कृतं मुनिसत्तमः।
तावदश्नन्तिपितरः स्वधाधाराभि मिश्रितम् ॥१४८॥
ब्रह्मचारी भवेत्तत्र रजन्यां ब्राह्मणैः सह।
सन्नियम्येन्द्रियग्राममात्मचिंतनतत्परः ॥१४६॥
श्राद्धम्भुक्त्वा भवेत्पश्चात्पुनर्भोजी च वायसः।
मैथुने रेत अश्नाति दुष्टान्नेनरकं व्रजेत् (वसेत) ॥१५०॥
एतचानुमतं तत्र ऋषि सर्गे प्रजापतिः।
अग्निहीनास्तुये विप्रास्तथा माध्यन्दिनो द्विजाः ॥१५१॥
तथा वाजसनेयिनः प्रोक्ताः कलौ श्राद्धपरायणाः।
कुर्यात्साधारणं श्राद्धं सर्वकाम फलप्रदम् ॥१५२॥
ततो मांसं प्रवक्ष्यामि श्राद्धार्थे सम्प्रकल्पयेत्।
मात्स्यहारिणऔरभ्रशाकुनिछागपार्षतैः ॥१५३॥
ऐणरौरववाराहशाशै मांसं यथाक्रमम्।
मास वृद्धाभितृप्यन्ति उक्तमेवं पितामहैः ॥१५४॥
खड्गामिपं महाशल्कं त्रिमधून्यन्नमेव च।
लोहामिपकालशाकं मासं वाध्रींणमक्षयम् ॥१५५॥
अलाभे पायस कुर्यात्गोक्षीरं तण्डुलैः सह।
तृप्तिर्द्वादशवर्षाणि इक्षवः संयुतः पितन् ॥१५६॥
पित्र्यर्थे पायसं कुर्यान्न कुर्यादामिषोऽपिवा।
मुन्यन्नेषु यथा प्रीतिः पितृणान्नतथापले ॥१५७॥

श्राद्धेषु पायसं श्रेष्ठं मुद्गमाषं तथैव च।
स्य शाग्निन सामग श्रेष्ठ पितृणा दत्तमक्षयम् ॥१५८॥
अटेन पृथिवी सर्वा सशैलवनकाननम्।
लभेत यदि पित्र्यर्थं मामामम्भर(?) वित्तकम् ॥१५९॥
काम्यकातिथि कर्त्तव्या (व्य) श्राद्धकर्म्म द्विजातिभि।
पौर्णिमा श्राद्धमन्नेन सम्पूर्णफलमश्नुते ॥१६०॥
कुर्व्वन्त्यै प्रतिपच्छ्राद्ध प्रभूत धनमश्नुते।
श्रीरा लभते मन्त्रा तृतीयामश्वमेव च ॥१६१॥
चतुर्थी क्षुद्रपशून पुत्रान्प्राप्नोति पञ्चमीम्।
षष्ठी च द्यूतविजये लभेद्वाणिज्य सप्तमीम् ॥१६२॥
अष्टमी या मकशाक नवमी दशमी च गो।
एकादशी धन धान्य द्वादशी च हिरण्यकम् ॥१६३॥
कुप्य गाति त्रयोदश्यां ज्ञिन शास्त्रचतुर्दशीम्।
अमावास्या च सर्वेषां फलमाप्नोति काम्यके ॥१६४॥

इति श्रीब्रह्मोक्ते याज्ञवल्क्ये पितृकल्पे काम्य
प्रकरणे चतुर्थोऽध्याय।

# अथ पञ्चमोऽध्यायः

## श्राद्धवर्णनम्

अथातः सम्प्रवक्ष्यामि आम श्राद्धं च कल्पना।
द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥१॥
आमश्राद्धं प्रकुर्व्वीत यस्यभार्या रजस्वला।
आपन्नगमो तीर्थे च चन्द्र सूर्यग्रहे तथा ॥२॥
आमश्राद्धं प्रकुर्व्वीत शूद्रं कुर्यात्सदैवहि।
सक्तुभिः पिण्डदानं च पिण्याकेन गुडेन च ॥३॥
कर्त्तव्यं ब्रह्मणा प्रोक्तं चरुणा पायसेन वा।
आमश्राद्धमिदं गुप्तं तथा पाकविवर्ज्जितः ॥४॥
तृप्ताः प्रश्नविहीनस्तु आमेहोतानिवर्ज्जयेत्।
आमं वा यदि वा पक्वं विप्रेभ्यो यत्प्रदीयते ॥५॥
ते नाग्नौ करणं कुर्याद्भूमौ पात्रं निधापयेत्।
आमेन कुरुते श्राद्धं विप्रान्पक्वेन भोजयेत् ॥६॥
तावुभौ ब्रह्मणा प्रोक्तं नरकाहो (?) न संशयः।
पिंडं निर्वापरहितं यत्र श्राद्धं विधीयते ॥७॥
स्वधावाचन लोपोऽस्ति विकरस्तु न लिप्यते।
अग्नौकरणमर्घ्यं च आवाहनमवते (?) जनम् ॥८॥
पिण्डं श्राद्धेषु कर्त्तव्यं पिण्डहीनं विवर्ज्जयेत्।
अयने विषुवे चैव मन्वमम(मन्वादिषु) युगादिषु ॥९॥

श्राद्धं कुर्व्वीत यत्नेन पिण्डनिर्व्वपनं विना।
मघायुगादौ(?) भरण्यां यत्नेन परिवर्जयेत् ॥१०॥
पिण्डश्राद्धं न कुर्व्वीत यदिच्छेत्सुत जीवितम्।
याम्यं वा पैतृकं वापि पितृपक्षे विशेषतः ॥११॥
तत्र सङ्कल्पना कुर्यात्पितृणा पुष्टिदः सदा।
मन्वादिश्च युगादिश्च मघा च भरणी तथा ॥१२॥
श्राद्धं तत्र प्रकुर्व्वीत पिण्डनिर्व्वपनं विना।
यद्ददाति गयास्थस्य सर्वशामन्त्यमश्नुते ॥१३॥
तथा मघाभरण्योश्च त्रयोदश्या विशेषतः।
प्रौष्ठपदस्य द्वादश्या पितृभ्योऽर्पयतेयदि ॥१४॥
तत्र सङ्कल्पना श्राद्धं पिण्डनिर्व्वापरक्षणम्।
यदा सङ्कल्पं कुरुते द्वादश्यां च मघायुताम् ॥१५॥
अहं सङ्कल्प मन्तुन्दव(?) पितामहः।
पितृपक्षे त्रयोदश्या पिण्ड श्राद्धं न कारयेत् ॥१६॥
कुर्वन्वै कल्पना श्राद्धं मघासह मघा विना।
कृष्णपूर्णे तु पञ्चम्यां य श्राद्धं कुरुते नरः ॥१७॥
कामिकं तु वरं पुत्र लभते नात्र संशयः।
प्राशन मध्यमं पिण्ड पितामह [redacted] जीवति ॥१८॥
नारी प्रसूयते पुत्र लभते नात्र संशयः।
कल्पना च त्रयोदश्या आनन्त्यायोपकल्पते ॥१९॥

पितृपक्षे चतुर्दश्यां यः श्राद्धं कुरुते नरः।
सन्ततिस्तु हनिष्यन्ति विनाशस्तकृते मृते ॥२१॥
श्राद्धं दानं चतुर्दश्यां विनाशस्त्रनिपातने।
ज्येष्ठपुत्रो विनश्यति पितृणाञ्चा अधोगतिः ॥२२॥
स्वस्थमृत्युः पिता यस्य शस्त्रघाती पितामहः।
पार्वणञ्चेति विलयंत्रयातेशस्त्रघातकाः ॥२३॥
मध्यमं युग्मपिण्डौ च विहंगं वापिद्वहरेत्।
पितामहं तथाप्येके त्रयाते शस्त्रघातकाः ॥२४॥
यथाविहंगो पक्षाभ्यां अगमाश्रित्यतिष्ठति।
तथा पिता स्वद्रक्षं च पितामहमगाश्रितः ॥२५॥
मृत्काष्ठोपललोहेषु विद्युद्पातविषादिभिः।
नखीदंष्ट्रिविपन्ना ये तेषां शस्ता चतुर्दशी ॥२६॥
जलादिषु विपन्ना ये वन्हौ पावककेहताः।
पक्षिशस्त्रविपन्ना ये तेषां शस्ता चतुर्दशी ॥२७॥
कण्ठपाशविपन्नाये योगिनीवापमृत्युना।
ततोवृष्टिविपन्ना ये तेषां शस्ता चतुर्दशी ॥२८॥
विप्रशापहताये च अग्निदग्धामृताश्चये।
तेषां श्राद्धं प्रशंसन्ति पितृपक्षेचतुर्दशी ॥२९॥

इति श्री ब्रह्मोक्तेयाज्ञवल्क्ये आत्मकल्पनाशस्त्रहते यजुषा
निरग्निःश्राद्धविधिवर्णनं नाम पञ्चमोऽध्यायः

---

# अथ षष्ठोऽध्यायः

## श्राद्धवर्णनम्

अथातः सम्प्रवक्ष्यामि मातृणां पूजनं पृथक् ।
पिता सर्वत्रपूज्ने सपत्नीकाममीप्सत. ॥ १ ॥
वृद्धे चादौ गयायातौ(तीर्थे)मध्ये अन्वष्टकासु च ।
पृथक् श्राद्धं च नारीणामन्यत्र पतिनासह ॥ २ ॥
वृद्धे श्राद्धं त्रयं कुर्यात्सश्राद्धौमातृकंस्मृतम् ।
द्वितीयं पैतृकं ज्ञेयं तृतीयं मातामहं सदा ॥ ३ ॥
पाकं वा तु वह्निशाला मोदनं वरदं दधि ।
नान्दीमुखेषु कर्त्तव्यमामश्राद्धं मदामुने ॥ ४ ॥
दधिनद्राक्षतमिश्रं स्यात्पिण्डनिर्वपनं बुधै ।
यनरनक्षजनो दर्भांस्तिलार्थे च यवा स्मृता ॥ ६ ॥
सम्पन्नमिति पृष्ठार्थो नित्यकर्मसुपूर्वकम् ।
वृद्धौ विवाहे यज्ञे च मातृणा कुलपूजने ॥ ७ ॥
नव दैवतकं श्राद्धे अवीत्स्वायम्भुव परम् ।
मातृश्राद्धं तु पूर्वं स्यात्पितृणा तदनन्तरम् ॥ ८ ॥
ततो मातामहाना च वृद्धिश्राद्धत्रयं स्मृतम् ।
गयायां पुष्करे चैव तथा अन्वष्टकासु च ॥ ६ ॥
पितु मुख्ये न कर्त्तव्यं पार्वणं तु चतुष्टयम् ।
जीव भर्त्तरि रामे च मृतेभर्त्तरि दक्षिणे ॥१०॥

श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा।
पार्वणेषु सपिण्डेषु वृद्धावन्वष्टकासु च ॥११॥
क्षयाहे पर्वणि पूर्वं विश्वेदेवान्प्रपूजयेत्।
मन्वादिष्वयुगादिष्व तथाकाम्येषुपार्वणे ॥१२॥
विश्वेदेवा अपूज्याश्चेयस्करोति नतत्कृतम्।
याज्ञवल्क्यादिदं श्रुत्वा ऋषयः शंसितव्रताः ॥१३॥
ते पृच्छन्तिमहात्मानं मिथिलास्थंतपोधनम्।
कस्मिन्श्राद्धेषु के पूज्या विश्वेदेवामहाबलाः ॥१४॥
ये यत्र विहिताः श्राद्धे कथयस्व महामुने।
तपः स्वाध्यायनिरतो ब्रह्मर्षो वाक्यमब्रवीत ॥१४॥
क्रतुर्दक्षो वसुः सत्यः कामः कालोधृतिः रुचिः।
पुरूरवोमाद्रवसो नाकश्चैव तथापरः ॥१५॥
द्वादशश्चापि सर्वश्च सर्वस्याणनिगद्यते।
एवं द्वादश विख्याता विश्वेदेवास्तुधर्मजाः ॥१६॥
पर्वकाले क्रतुर्दक्षोऽस्त्वसुः सत्यौ च नान्दिके।
कामः कालौ नवश्राद्धे काम्ये च धृतिलोचनौ ॥१७॥
पुरुरवोमाद्रवसौ(पुरूरवामाद्रवश्चैव)क्षयेऽहनि तु पार्वणे।
सपिण्डीकरण श्राद्धे एको नाकः प्रकीर्त्तिताः ॥१८॥
पितृन्यज्ञे तथान्येषुत्रिदशेविष्णुरूपिणः।
विश्वारूपास्तथाख्याताधर्मजा धर्मनन्दनः ॥१६॥
श्राद्धकालेषु पूज्यन्ते ये यथा परिकीर्त्तिताः।
वैशाखेतृतीयाशुक्लेस्मिते नवमी कार्त्तिके ॥२०॥

माघेपञ्चदशी कृष्णा अश्विन्या च त्रयोदशी ।
हुन दत्त तथा श्राद्धं युगादिष्वक्षयम्भवत् ॥२१॥
आश्विने नवमी शुक्ला द्वादशी कार्त्तिकस्य च ।
तृतीया चैत्रमासस्य तथाभाद्रपदस्य च ॥२२॥
फाल्गुनस्यत्वमावास्या पौषस्यैकादशीसिता ।
आषाढस्यापिदशमी माघमासस्य सप्तमी ॥२३॥
श्रावणस्याष्टमीकृष्णा तथा षाढी च पूर्णिमा ।
कार्त्तिकी फाल्गुनीचैत्री ज्येष्ठीपञ्चदशी तथा ॥२४॥
मन्वन्तरादिषु(दयश्चैता) सर्वदत्तस्यादक्षयकारकम् ।
पिण्डायत्र न पूज्यन्ते तत्र चत्वारिवर्ज्जयेत् ।
अर्घ्यमावाहन चैव निकरश्चावनेजनम् ॥२५॥
इति श्री ब्रह्मोक्ते याज्ञवल्क्ये यजुपानिरग्निर्वृद्धि
प्रकरणनाम षष्ठोऽध्याय ।

---

# अथ सप्तमोऽध्यायः

## श्राद्धवर्णनम

अथातः सम्प्रवक्ष्यामि सपिण्डीकरणेविधिः ।
स्त्रियाश्च पुरुषस्यैव श्रुतिरेषा पुरातनी ॥१॥
मृतेऽहनि तु कर्त्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसम्वत्सरं चैव+आद्य एकादशेऽहनि ॥२॥
द्वादशाहे त्रिपक्षे च षण्मासे मासिकेऽब्दिके ।
श्राद्धानिषोडशैतानि संस्मृता (तानि) परमेष्ठिना ॥३॥
यस्य संवत्सरादर्वाक्सपिण्डीकरणं भवेत् ।
तस्याप्यन्नं सोदकुम्भं दद्यात्सम्वत्सरं द्विजाः ॥४॥
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
त्रीणि पित्र्ये चतुष्टयं त्रीणि पितृणामेकं ॥५॥
प्रेतस्य प्रेतपात्रं पितृ पात्रेऽथ सिञ्चति ।
ये समानाह्व मिति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥६॥
एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ।
अत ऊर्ध्वम्प्रदातव्यं प्रेतान्नं प्रतिवत्सरम् ॥७॥
यस्मिन्नहनिप्रेतः स्यात्तस्मिन्नहनि दापयेत् ।
यस्यैतानि न दीयन्ते प्रेतश्राद्धानिषोडश ॥८॥
पिशाचत्वं स्थिरन्तस्य दत्तैः श्राद्धशतैरपि ।
पति मेके न कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ॥९॥

सा मृतापि गतैकत्व सत्र्वंवण प्वथं निधि ।
स्वेनभर्त्रा समं श्राद्धं मात(?)मुक्तं सदैव हि ॥१०॥
पितामह्यपि स्वेनैव स्वेनैव प्रपितामही ।
श्वश्रू जीवति भर्त्तारं स्नुषा चान्तर्हितं यदि ॥११॥
अथं पितति भर्त्तारं पिण्डं निसृज्य मेलयेत् ।
यस्यजीवे पितुर्मातृ भ्राता भार्यापि जीवति ॥१२॥
सपिण्डीकरण तस्य पितामहपितृत्रयम् ।
सर्वासामेनपत्नीनामेकाचेत्पुत्रिणी भवेत् ॥१३॥
तेन पुत्रण मर्वास्ता माता पुत्रवती ह्यज (प्राह) ।
पितानिश्रान्तिमापन्नो यस्यजीवत्पितामह ॥१४॥
वृद्ध प्रपितामह साद्धं कुर्यात्प्रे तादिकी क्रिया ।
वृद्धरचेनतु यत्पात्रंनमिश्चेत्प्रपितामहम् ॥१५॥
तत्सुत मिचयेत्पात्रतत्सुत मिचयेत्सुत ।
वृद्धप्रपितामह पिण्डवत्त्रिधा कारयेद्बुध ॥१६॥
प्रकर्षगगते प्रेते नापिता प्रेत उच्यते ।
पितु पितामहे जीव (यति) पुत्रश्चेन्म्रियतेयदि ॥१७॥
सपिण्डी करण तस्यतसुश्राद्धादिस्तान्त्रै पितृन् ।
सपिण्डी करणा दूध्व यावद्दद्वय भवत् ॥१८॥
यदि श्राद्ध प्रकुर्वीत न कुर्याद्भूरि भोजनम् ।
तीर्थ स्नान महादान यचान्यत्पितृतर्पणम् ॥१६॥
अष्टमक कुर्वीत महागुरु निपातने ।
यथाग्योनिगुणान्मतान्मच्छादयति भास्कर ॥२०॥

पितृ द्वारं तथा प्रेतं (तो) वर्षं गान्त्याग तिष्ठति ।
स्नानं दानं तथा तीर्थं श्राद्धं च पितृ तर्पणम् ॥२१॥
सपिण्डीकरणादूर्ध्वं कुर्यात्पुत्रः सदैव हि ।
दशम एकादशे चैव द्वादशे वा तथैव च ॥२२॥
प्रमादात्षोडशे वापि कुर्यात्प्रेतादिकां क्रियाम् ।
अश्विनी पुष्य हस्तं च स्वाति श्रवण रेवती ॥२३॥
न कुर्यात्प्रेतकर्म्माणि सपिण्डीकरणादिकम् ।
पतन्ति पितरस्तस्य नरके घोररौरवे ॥२४॥
एकाहे अहेपइ(?) देदशाहैकादशे तथा ।
द्वादशाहे षोडशे च मासे चैव त्रिरब्दिके ॥२५॥
तथात्रिमासेषण्मासे दशमे ऊनवार्षिकम् ।
सपिण्डी करणे श्राद्धे वृषोत्सर्गं च षोडशे ॥२६॥
औरसक्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोपविद्धश्च दायादो बान्धवाश्चषट् ॥२७॥
औरसो धर्मपत्नीतस्तत्समः पुत्रिकासुतः ।
न्यायमार्गेषु यो जात औरसः परिकीर्त्तितः ॥२८॥
क्षेत्रज्ञः क्षेत्रजातस्तु स्वगोत्रेणेतरेण च ।
यथा गावश्व शंडश्च क्षेत्र शंडश्च क्षेत्रज्ञः ॥२९॥
पुत्र इत्युच्यते पितृमातृषु योदत्तः संस्कारकरः ।
स्वगृहे कृतं स्वज्ञाति जात उच्चैर्वा सदत्तःपरिकीर्त्तितः ॥३०
दद्यान्मातुः पिता यस्मात्सपुत्रो दत्तको भवेत् ।
ज्येष्ठज्ञातिस्वयं जातः पाल्यः कृत्रिम उच्यते ॥३१॥

गृहे प्रच्छन्नउत्पन्नो गूढजस्तु सुत स्मृत ।
स्वजातिजातो यत्स्वक्त सनाद सगरन्तया ॥३२॥
उत्सृष्टा गृह्यते यस्तत्त्व सोपविद्धो भवेत्सुत ।
श्रायाद्रा सर्व धर्मेषु तथा मन्त्रान कारक ॥३३॥
यत्र कर्मणि दाने च पड्यथा परिकीर्त्तिता ।
कानीनस्य सहोनश्च क्रीत पौनर्भवस्तथा ॥३४॥
स्वयंदत्तापविद्धश्च यान्धवा पट् प्रकीर्त्तिता ।
कानीन कन्यकाजातो मातामह सुतो मत ॥३५॥
अथ स्व क्षामिनोनापि गृहिण्या म महोन(?)।
पितृ मातृश्च (मातृभ्या) च विक्रीतो वास क्रीतलूच्यते॥
अक्षताया क्षतायाश्च पुनर्भूत पुनर्भव ।
स्वयदत्तापविद्धश्च पूर्वेन प्रकीर्त्तिता ॥३७॥
अग्राह्येया अपाङ्क्तेया दायाद् पुत्र उच्यते ।
अन्तेवासिनि चाण्डाल गरदे पतितपूपके ॥३८॥
गृहे सूतके मन्थभेदा दैव पित्र्ये च (न) योपयेत् ।
आश्रमादाश्रम गच्छेच्चतुर्थे वाश्रमे वसेत् ॥३९॥
निवृत्त सर्वकायपु अन्तर्वासी स उच्यते ।
चण्ट (ण्डाल) स्तुत हित क्रोध अदम्भो दम्भनारण ॥४०॥
यस्य विप्रस्य(?)नन्माद् चाण्डालत्व विनिर्दिशेत् ।
गरद इत्युच्यते वद्म्याशीत्याध्यापयेत्सुत ॥४१॥
स यत्र मरहस्य च त्रिषोत्वी गारद स्मृत ।

तथा पङ्क्तिरभोजी च स विप्रः पङ्क्तिदूषकः ।
शरीराणीन्द्रियान्याहुः शरीरं गृह उच्यते ॥४३॥
स्ववशे तस्य तिष्ठन्ति स विप्रो गृहमूपकः ।
दशग्रंथि समायुक्तं शरीरं यस्य देहिनाम् ॥४४॥
यस्तं भिन्दति ज्ञानेन ग्रन्थभेदी स उच्यते ।
वार्त्ता वृत्तिश्च शाली च जपावृत्तो घोर सन्यस्तः ॥४५॥
यज्ञे दाने तथा श्राद्धे दत्तं भवति चाक्षयम् ।
स्वगृहे वर्त्तते नित्यं श्रुतिस्मृत्यवगाहनम ॥४६॥
अयाचितेषु गृह्णीयाद्वार्त्ता वृत्तिः स उच्यते ।
शीलोञ्छ यास्तु (या) वर्वर्त्ति प्रतिग्रह विवर्ज्जितः ॥४७॥
भुञ्जीतातिथि संयुक्तो वृत्तशालीनको द्विजः ।
मासीनं यस्तु गृण्हीयात्सभुक्ते न्यस्तु गृहाति ॥४८॥
कुशूलं कुम्भीधान्यानि जापा वृत्तिः स उच्यते ।
चतुर्थं साहसंयुक्तो अन्नं पूर्णन्तु संस्थितः ॥४९॥
तद्गतेन्यत्प्रगृह्णीयाद्विप्रोऽसौ घोरसः स्मृतः ।
ते धन्यास्ते कृतार्थाश्च पितृभिश्चैव दापयेत् ॥५०॥
येषु श्राद्धेषु भुञ्जीत ब्राह्मणं च यथोद्यतम् ।
असम्मानात्तपो वृद्धिः सम्मानाच्च तपः क्षयः ॥५१॥
अर्च्चितः पूजितो विप्रो दुग्धा गौरिव शान्तये ।
कृष्णसारो मृगो यत्र मंद्रे यदुपि(?) उत्तमम् ॥५२॥
ब्राह्मणा वन्हिहीनाश्च तत्र श्राद्धे मयोदितम् ।
चाण्डालैः पशुकंठ पाश निगडैर्वापाक्षितैर्द्रंष्ट्रिभिः

विप्र स्वस्र विप्रहामि मुट्ठक पाशाण सर्पविषम् ।
पिड्याम्द निदेश मृत्यु शस्टे कूपेप्रपातेष्वपि
अरवास्तोपृपमस्मघामस्नने कुष्ठेऽप्यपस्मारिणि ॥४३॥
लूता विस्रव शीतगोभ्र (स्र) वहते भस्न ।
देवर्षिणो च मसर्ग मनुनाऽत्र तथैव च ।
पितृ कल्पमि (?) त्तं अवागा भापितं मम ॥४४॥
अग्निनादश्च ये विप्रा मंत्रे वाजसनेयिन ।
तेषां श्राद्ध प्रशंसति परमेष्ठी पितामह ॥४५॥
अत ऊर्ध्वप्रवक्षामि सर्वेश धर्ममुत्तमम् ।
यस्मिन्देशे मृग कृष्णस्तस्मिन्धर्मान्निबोधत ॥४६॥
पितुरुत्तमरीचायात्पण्मासान्मातुरुच्यते ।
मासत्रय तु पत्नीनां नारायणबलिक्रिया ॥४७॥
अन्येषा चैव गोत्राणां त्रिरक्षे बलि विष्णुना ।
अगानि षडाश्चत्वारोभीमासान्याय विस्तर ॥४८॥
पुराणधर्मशास्त्र च विद्याश्चैव चतुर्दश ।
पुनर्मन्वङ्गिरोयामो गौतमेत्युशनोयम ॥४९॥
वशिष्ठदक्ष सम्वर्त्त शातातपपराशर ।
आपस्तम्बमनु हारीत शरव कात्यायनोगुरु ।
ब्रह्मा तु (वि) विष्णव इ च धर्म शास्त्र प्रयोजका ॥५०॥

इति श्रीब्रह्मप्रणीतयाज्ञवल्क्येधर्मशास्त्रेयनुपानिरुपिपितृकल्पम्
सप्तमोऽध्याय ।

# अथाष्टमोऽध्यायः

## तत्रादौ ब्रह्मचारिधर्मवर्णनम्

अतः परं प्रवक्ष्यामि लोकानांधर्म्ममुत्तमम् ।
ब्राह्मणाद्यास्तुवर्णानां यथावदनुपूर्वशः ॥ १ ॥
निपेकादिश्मशानान्तास्तेपां वै मन्त्रतः क्रियाः ।
आरामिकोनापितश्च दारुहःकांसघातकः ॥ २ ॥
लौहकः कुम्भकारश्च पड्प्रकृत्या च उत्तमाः ।
सूतकश्चक्रिणस्तथाध्वजहोच्छिष्टभोजी च खङ्गकृत्या-
धमाधमाः(?) ॥३॥
गर्भाधानमृतौ(?) पुंसवनस्यन्दनात्पुरा ।
पष्टेऽष्टमे वा सीमन्तो मास्येतेजाः (?) कर्म च ॥ ४ ॥
अहन्येकादशेनाम चतुर्थे मासि निष्क्रमः ।
पष्ठेऽन्नप्राशनंमासि चूडां कुर्याद्यथाकुलम् ॥ ५ ॥
एवमेनः शमं याति वीजगत्(?)समुद्भवम् ।
तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तुसमन्त्रकः ॥ ६ ॥
गर्भाष्टमेऽष्टमेचाब्दे ब्राह्मणस्योपनायनम् ।
राज्ञामेकादशेवर्पे विशामेकेयथाकुलम् ॥ ७ ॥
ब्रह्मणाकथिता(नि) पूर्वं संस्काराणि निबोधत ।
ब्रह्मचर्यसवामस्य कार्यं विप्रस्यपञ्चमे ॥ ८ ॥
राज्ञोवलार्थिनः पष्ठे वैश्यस्येहार्थिनोऽष्टमे ।
सर्वेपां भोजयेत्तं च मध्यान्ह(ह्नार्के)गत(?)विधिः ॥ ६ ॥

विधिवद्वह्नि संस्थाप्य पात्रोत्पादनमेव च ।
पयुंक्षशिराल्द्रुन्व(?) पश्चाद्ग्रेभ्यि (?) वीत् ॥१०॥
ब्रह्मचर्यमार्यमागा च गुरोर्वाचमथाब्रवीत् ।
पीतवस्त्रं यथेन्द्राय मन्त्रमस्यपरिधापयेत् ॥११॥
येनेन्द्राय सुमन्त्रेण कौपीनमुपकल्पयेत् ।
इयं दुरुक्तसुषायं युनासुरामात्रयैव च ॥१२॥
मेखला तत्र विन्यस्य शिष्यायब्रह्मनर्मसे ।
ब्रह्मसूत्रं समादाय गायत्र्या चाभिमन्त्रितम् ॥१३॥
यज्ञोपवीतेनिमन्त्रेण ब्रह्मसूत्रं समर्पयेत् ।
अनेनमन्त्रेणयज्ञस्यत्वायज्ञस्योपनह्याम्युपनीते नोपनह्यामि
आयुष्यंनवं स्वश्रायस्योपमौक्तिदं ।
इति मंत्रेण गुरुश्चैव पठन्मन्त्रंसंकृणतस्तथैव(?) च ।
योमेदण्ड. परापदे दंण्टंसमाददे ॥
ब्राह्मणो बिल्वपालाशौ क्षत्रियोवटखादिरौ ।
पिप्पलोदुम्बरौ वैश्ये दण्डमाहोतिधर्मवं ॥१४॥
शिरोल्ललाटनासाग्रे ब्राह्मणक्षत्रियविशाम् ।
मुष्टिद्वारुशानिनमेग्वलाश्शाह्मन्त्र(योः) (?)॥१५॥
पलत्र च स्यात (?) ब्रह्मचारी गृहस्थयोः ।
पञ्चशत्य(?)मनेयोक्ता चतुरशीति बाहुजे ॥१६॥
पञ्चसप्तति वैश्यस्य संख्येयमुपवीतके ।
मृगेय रौरवं विप्रे क्षत्रियस्याजिनंस्मृतम् ॥१७॥

अजंगव्यन्तु वैश्यस्य सर्वेषां शुभकृत्तथा।
विप्रस्यमेखलामौञ्जी मौर्वीस्यात्क्षत्रियस्य च(स्तथा) ॥१८॥
शणसूत्रा तु वैश्यस्य त्रिविधा मेखला मता ।
प्रत्यक्षमलाभे चैव कुशाश्मत्तकबल्वजौ ॥१९॥
प्रवराग्रंथिभेदाश्च संस्कृत्यं च त्रिभिस्तथा।
स्याद्गिरञ्जलिना (?) आत्मना पूरयेद्धनुः ॥२०॥
आपोहिष्ठेतितिसृभिरभिषिच्य पुनः पुनः।
सूर्यस्योद्धे पणशिष्यं(?)तच्चक्षुर्मन्त्रंवर्जयेत ॥२१॥
शिष्यस्य हृदयालंभमत्रतेत्युदाहरेन्।
शिष्यस्य हस्तमादाय कोनामासीतिपृच्छति ॥२२॥
स्वनामग्रहणंशिष्यः शर्माहम्भोद्विजोत्तमाः।
इन्द्र...ब्रह्मण अग्निश्च भवत्तो शिष्यउक्तवान् ॥२३॥
भूतेभ्यश्च प्रजापत्यं देवायत्वा तथैव च।
सवित्रेभ्यो अद्भ्यश्चैव ओषधीभ्योपि समुच्चरेत् ॥२४॥
द्यावापृथिवीदेवेभ्यो विश्वेभ्यश्चतथैव च।
सर्वेभ्यस्त्वानुभूतेभ्यः परिददामिक्रमेण तु ॥२५॥
अग्नेः प्रदक्षिणंकृत्वा उपविश्य यथाविधि।
आज्याहुतीन्ततोहुत्वा शिक्षांशिष्याय उक्तवान् ॥२६॥
अथे (?) न...शास्त्रब्रह्मवर्चस्वीवीर्येणसंस्थितः।
आपोशानक्रियां कुर्यात्सूर्यसंयुक्तं न स्वपेत् ॥२७॥
सत्यमेव हि वक्तव्यं सत्यसंधानमेव च।
आपोशान क्रियानित्यं शिष्यो वाढं प्रवाच्यताम् ॥२८॥

यन्मा प्रजया पशुभिर्ब्रह्मवर्चसेन समिन्धे (धो)।
जीव पुत्रो ममा चार्यो मेधाव्यः हमनान्यनि
गकरिष्णुर्यशस्वी तेजस्वी ब्रह्मवर्चस्य (स्व्य) न्नादो
भूयास ॐ स्वाहा। द्वितीया तृतीया त्त्येवमुपोष्य इति-
वाग्भिः।

सुश्रवा च पुनर्दशान्पूर्ववत्परिसमूहनम्।
पर्युक्षोदकमादाय सुर्वं सन्मृज्य वै तथा ॥३७॥
तनूनपा अग्ने ऽसि मन्त्रेण पाणिभ्यां च प्रतप्ने न च।
मेधाम्मेदेवः सवितः मेधा देवी सरस्वती ॥३८॥
मेधाम्मेऽश्विनौ देवा वाधत्ता पुष्करस्त्रजौ।
अंगानि च म आप्यायन्ताम् वाक्प्राणश्चक्षुरेव च ॥३९॥
श्रोत्रश्च यशश्चैव बलमित्पर(?) उच्चरेत्।
ललाटे भस्मना दद्याद् ग्रीवा दक्षिणतः स्तथा ॥४०॥
आयुषं च पठेन्मन्त्रं प्रतिमन्त्रं क्रियायुतम्।
दक्षिणपात्रमादाय वामे हस्ते तथैव च ॥४१॥
भिक्षाचर्यमतः कुर्याद्भवौ (?) ब्राह्मणः सदा।
भवत्पूर्वं ब्राह्मणस्तु भवन्मध्ये ब्रूयाद्रुजः ॥४२॥
भवदन्तस्तु वैश्यस्य भिक्षाचर्यं विधीयते।
दण्डाजिनोपवीतानिमेखलाश्चैव धारयेत् ॥४३॥
ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्यं प्वात्मवृत्तये।
तदादौमातरं गच्छेद्भिक्षार्थं पुत्रकः सदा ॥४४॥

तेपु तेपु च गृह्णीयाद्ब्राह्मणो ब्रह्मचारिण ।
गुरोर्भैक्ष्य निवेदयित्वा(दित्वा) गुरोराज्ञामनुपालयन्॥४५॥
गुरोराज्ञां सदा तिष्ठेद् म् यन्नेव मन् यो (?)।
अरण्यात्समिधादाय समिन्नग्नौ जुहोति च ॥४६॥
धाच विभृजतेवाध शायी(शिष्य) तु नित्यश ।
अक्षारलवणाशीस्याद्दण्डधारी च सवदा ॥४७॥
अग्निपरिचरणं नित्य गुरुशुश्रूषण तथा।
उपनीय गुरु शिष्य महाव्याहृतिपूर्वकम् ॥४८॥
वेदमध्यापयेदेन शौचाचारांश्च शिक्षयेत्।
दिवा सन्ध्यासु वर्णस्य ब्रह्मसूत्र उदङ्मुख ॥४९॥
कुर्यान्मूत्रपुरीषे तु रात्रौ चेद्दक्षिणामुख ।
गृहीतशिश्नश्चोत्थायश्चद्भिरभ्युद्धृतैर्जलै ॥५०॥
गन्धलेपक्षयकर शौचकुर्यादतन्द्रित ।
अन्तर्जानु शुचौदेशो उपविष्ट उदङ्मुख ॥५१॥
प्राग्वा ब्राह्मण तीर्थेन द्विजो नित्यमुपस्पृशेत् ।
कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्र करस्य च ॥५२॥
प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ।
त्रि प्राश्यापो द्विरुन्मृज्य स्वान्यद्भि समुपस्पृशेत् ॥५३॥
अद्भिस्तु प्रकृतिस्थाभिर्हीनाभि फेनबुद्बुदै ।
हृत्कण्ठतालुगाभिस्तु यथासंख्य द्विजातय ॥५४॥
शुद्धयेरन्स्त्री चैव शूद्रश्च सकृत्स्पृष्ट्वाभि' मन्त्रितम् )न्ति हृ त ।
स्नानमब्दैवतैर्मन्त्रैर्मार्जनम्प्राणसयम ॥५५॥

स्नानं मन्त्रै तथा संध्यां कुर्यात्पूर्ववदाचरेत्।
जपन्नासीत सावित्रीं प्रत्यङ्क्तातारकोदयात् ॥५६॥
सन्ध्यांप्राक्प्रातरेवं हि तिष्ठन्नासूर्यदर्शनात्।
अग्नि(कार्य)र्ध ततः कुर्यात्सन्ध्ययोरुभयो रपि ॥५७॥
ततोऽभिवादयेत्वृद्धानसावहमिति ब्रुवन्।
गुरुञ्चैवोपासीत स्वाध्यायार्थं समाहितः ॥५८॥
आहूतश्चाप्यधीयीत लब्धं वाऽस्मै निवेदयेत्।
हितं चास्य चरेन्नित्यं मनोवाक्कायकर्मभिः ॥५९॥
कृतज्ञोऽद्रोहि मेधावी शुचिः कल्याणसूचकाः।
अथवा धर्मतः साधुः शक्तः प्रज्ञानवित्तदा ॥६०॥
दण्डाजिनोपवीतानि मेखलां चैव धारयेत्।
ब्रा(द्विजातिपु) पु चरेत्भैक्ष्यमनिंद्य ष्वात्मवृत्तये ॥६१॥
कृताग्निकार्यो भुञ्जीत वाग्यतो गुर्वनुज्ञया।
आपोशान क्रियापूर्वं सकृत्पात्रमहुत्सम( विशोधयेत् )॥६२
ब्रह्मचर्ये स्थितो नैकमन्नमद्यादनापदि।
ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीड़यन्। ॥६३॥
मधुमांसजनोच्छिष्टमु(मु)क्तस्त्रीप्राणहिंसनम्।
भास्करालोकनाश्लीलपरिवादादि वर्ज्जयेत ॥६४॥
स गुरुर्यः क्रियां कृत्वा वेदमस्मै प्रयच्छति।
उपनीय वदेद्वेदमाचार्यः स उदाहृतः ॥६५॥
चत्वारिंशाष्टमधिकं पठेद्वेदं समाहितः।
यावद् वा ग्रहणं कुर्याद् ब्रह्मचर्यं समाचरेत् ॥६६॥

वेदारम्भावसाने च वेदाहुत्या च हूयते।
पृथिव्यामग्नयऋग्वेदेन्तरिक्षवायवे यजुर्दिवे सूर्याय सामेप
दिक्चन्द्रथर्वण एवच।

वेदर्षयद्धया हुत्य भूरादिश्चाष्टमा हुतीम्।
ततो ब्राह्मण छन्दोभ्य प्राजापत्याश्च देवादौ जुहुयात्स-
समाहुतिम् ॥

व्याहृत्याद्याश्चाहुत्या अन्यमन्त्येप्नय विधि।
असयमेन योऽधीते अनार्यं च (?) कदाचन ॥६७॥

ब्रह्मचैकासंयमस्थेन (येन) अधीतास्यत्वपि।
आमपात्रे यथान्यस्तं आपोमधुघृत पय ॥६८॥

न तिष्ठ पात्रदौर्बल्यात्तरसा तस्य भाजनम्।
एव ह्यपात्रसयोगाद्धीतोऽपि विनश्यति ॥६९॥

पारदोषण वक्तोऽपि अपवित्रं (त्रो) भविष्यति।
गायत्री सारमात्रोऽपि वर विप्रो (प्र) सुयन्त्रित ॥७०॥

नापण्डितश्चतुर्वेदी मवाशी सर्वविक्रयी।
आचारहीन न पुनन्ति वेद यद्यप्यधीता सहषड्भिरङ्गैः
ते मृत्युकाऽपुरुष त्यजन्ति नीढ शकुन्ता इव जातपक्षा ॥७१

अनध्याये तु योऽधीते छान्दस विमलं शुभम्।
षष्टिवर्षसहस्राणि विष्ठाया जायते कृमि ॥७२॥

प्रतिवत्सरब्रह्मचर्यं द्वात्रिंशाद्दानिपक्ष च।
मातुयज्ञमे जायन्ते द्वितीयं मौञ्जीबन्धनात् ॥७३॥

ब्राह्मणक्षत्रियविशः (विशां) स्तस्मादेते द्विजाः स्मृताः ।
उपवीते तु संगृह्य वर्णविद् गुरुमेव च ॥७४॥
तावत्त्रिगुणितं सूर(त्रं)पर्याप्तं तु पुनस्त्रिभिः ।
ब्राह्मणे दक्षिणे हस्ते चतुरंगुलिरावृते ॥७५॥
ब्रह्मपर्वस्तु विज्ञेयः सूत्रार्थमाहरेद्द्विजः ।
एकेन ग्रथितस्तन्तुर्द्विगुणस्त्रिगुणस्तथा ॥७६॥
प्रवराग्रन्थिभेदश्च सूत्रे मेखलयोः सदा ।
सूरं (त्रं) सलोमकं विशात्पुनः कृत्वाद्विलोमकम् ॥७७॥
देवास्तत्र तु विन्यस्य ब्रह्मसूत्रे विधिः स्मृता ।
पृष्ठदेशे च नाभिं च धृते (धारिते)य द्विन्दते कटिम् ॥७८॥
तद्धार्यमुपवीतन्तु (?) अतिलम्बं नचोच्छ्रितम् ।
ॐ काराग्नि नागसोमः पितरश्च प्रजापतिः ॥७६॥
वायुरर्काष्ट(कं)तत नवमः सर्वदेवताः ।
अज्ञानेन तु विप्रस्य विना यज्ञोपवीतिना ॥८०॥
कृत्वा मूत्रपुरीषं च शुद्धिर्यातां निबोधत ।
एकरात्रं चरेन्मूत्रं पुरीषेण दिनद्वयम् ॥८१॥
स्त्रियस्विना अकामे वा द्विजो वा ब्रह्मचारणः ।
स्वप्ने स्वप्नाश्रवे शुक्रं शुद्धिस्तस्य वदाम्यहम् ॥८२॥
स्नात्वा तु सूर्यमर्चिष्य(त्वा)त्रिपुनश्च ऋचम्पठेत् ।
पुनन्तुमे जपेन्मन्त्रं अकामे श्राव शुद्ध्यति ॥८३॥
अवकीर्णी भवेद्धत्वा ब्रह्मचारी स योषिताम् ।
गर्दभम्पशुमालभ्य नैऋत्यां स विशुद्ध्यति ॥८४॥

ब्रह्मचारी स्त्रियं गत्वाऽवकीर्णी भवेत्तु स ।
गर्दभं पशुमालभ्य यजेत्तेनैव चतुष्पथे ॥८५॥
अग्निं स्थाप्य विधानेन नैर्ऋत्यां देवतां यजेत् ।
का(ला)य कामकाम(येभ्य)श्च निर्ऋतेभ्यस्तथैव च ॥८६॥
रक्षोभ्यो देवमाभ्यश्च स्वाहान्ते जुहुयात्तदा ।
गुर्वाचार्यद्विजांश्चैव परिख्याप्य यथाविधि ॥८७॥
पात्रायं संममाद्रायमैक्ष्यं भ्रमणं चरेत् ।
तेभ्यो लब्धेषु भैक्ष्येषु वर्तयत्त्येककालिकम् ॥८८॥
उपस्पृश्यत्रिषवणमब्देन स विशुद्ध्यति ।
गङ्गायां च ततो गत्वा गायत्रीं चायुतं जपेत् ॥८९॥
ब्रह्मचारी तत शुद्धो वेदपाठी भवेत्पुनः ।
यावद् ग्रहण वदस्यतावद्ब्रह्मचर्यं (?) चरेत् ॥९०॥
गुरुशुश्रूषणे नित्य गुरुव्रतपरायणम् ।
गुरुभक्तिसमायुक्त गुरुवाक्यमनुस्मरन् ॥९१॥
व्रतत्रयसमायुक्त स्नातकत्व भवेत्स्फुटम् ।
त्रिधा व्रती व्रतो विद्या स्नातकास्त्रय कीर्तिता ॥९२॥
असमाप्य (प्य) व्रतो यस्य समाप्त तु व्रतं तथा ।
व्रतस्नातक कथ्यन्ते (उच्यते)व्रतार्थी सोऽपि+उच्यते ॥९३
असमाप्त (प्य) व्रत यस्य समाप्य (प्त) वेदपाठनम् ।
विद्यास्नातक सोऽत्रयो विद्यार्थी प्रोच्यते बुधै ॥९४॥
व्रत तदुभौ समाप्य उभयो स्नातक उच्यते ।
आषोडशाद्द्वाविंशाच्चतुर्विंशाश्च वत्सरान् ॥९५॥

ब्रह्मक्षत्रविशां काल औपनायनिकःपरः ।
अतऊर्ध्वं पतन्त्येते सर्वधर्म्मवहिष्कृताः ॥९६॥
सावित्रीपतिता व्राताः सर्वस्तोमादृतेः क्रतोः ।
साम्य ( ? ) न प्रदातव्या पतिता परिकीर्तिताः ॥९७॥
येषां द्विजानां गायत्री कालातीते (ता)प्रमादतः ।
प्राजापत्यं ततः कुर्यात्तत उपनयनं स्मृतम् ॥९८॥
मीने रवौ हरेर्जीवे नष्टे शुक्रवृहस्पती ।
व्रतोपनयनं चरेत् अवले चन्द्रभास्करे ॥९९॥
विद्यावन्तं यशस्वन्तं अग्निवां(?)विद्रुपः श्रियः ।
व्रतोपनयनं चैत्रे अवले चन्द्रभास्करे ॥१००॥
रोमाद्ये(?) च फाल्गुनेवापि चैत्रे वैशाख एव च ।
अभ्रच्छाया न कर्त्तव्यं यदि गर्ज्जति तद्दिने ॥१०१॥
पौषादि चत्वारो (तुरो) मासास्तत्र वृष्टिरकां(?)जलम् ।
व्रतादिकं न कर्त्तव्यं यदि गर्ज्जति (च्छाति) तद्दिने ॥१०२॥
हस्तत्रयेपुरेवत्यां मृगे पुष्यपुनर्वसौ ।
श्रवणाश्विधनिष्ठायां व्रतंविरमेत् शुभे ॥१०३॥
पञ्चमी च तथा षष्ठी दशम्येकादशी तथा ।
द्वितीया द्वादशी वुद्धां(विद्धां,शुक्रे ज(?)च रवे व्रतम् ॥१०४॥
शाखाधिपे वलोपेते उपनीतक्रिया हि तु ।
सर्वेषां वा गुरौ चन्द्रे सूर्ये च वलशालिनि ॥१०५॥
गुरु शुक्र कुजे वुद्धे ऋग्यजुः सामाथर्व्वणः ।
शाखाधिपश्च विज्ञेयमुपवीते वलं हि तु ॥१०६॥

सम्पूर्णं व्रतचर्यं च ह्यधीते च तथैव च।
गुरुणा चा(श्च) नुज्ञात स्नानं कुर्यात्ततः परम् ॥१०७॥
गुरोः पादोपसंगृह्य कुशास्तरणं सम्मिन।
बहुश्रोऽस्तरत कुशानाम्नीर्यं ब्रह्मचारीमुपवेशयेत् ॥१०८॥
अष्टानामुदकुम्भानां पुरत (स्थापने) स्थापयेत्क्रमात्।
येनावरमयाभिश्र(?) आदायाभिमन्त्रयेत् ॥१०९॥
ततोऽभिषचनकुर्याम्मन्त्रविध पृथक् पृथक्।
योरेवनेन मन्त्रेण आपोहिष्ठान्तथैव च ॥११०॥
यो व शिवतमोरसानरमा अरगमामन।
एकीकृत्य परिभि (न) स्तूष्णीं येअरचन्तमभिमंत्रयेत् ॥१११॥
ततोऽभिषचन कुर्यादभिषिच्य पुनस्त्रिभिः।
तूष्णीमभिषिच्य (च्याथ) नमस्कुर्याद्गुरोरपि ॥११२॥
उदुत्तमेतिमन्त्रेण प्रमुच्येन्मेखला तदा।
निधायदण्डमप्सु तु वासोऽप्यन्यपरिधापयेत् ॥११३॥
आदित्यमुपतिष्ठेत्तु उद्यन्भ्राजश्च (?) मंत्रवत्।
उत्थाय च पुनः स्नात्वाऽऽपन्नास्तिस्त्रो स्तथा ॥११४॥
मुखेचापगृह्य (तु) प्राणापानौ च तर्पयेत्।
चक्षुर्भ्यां तर्पयच्चैव श्रोत्रेतर्पयेत्तथा ॥११५॥
पितरः शुन्धध्वं कुर्यात्पाण्योरवनेजनम्।
स्नातं(स्नात्वा)स्त तताद्यान द्वितीयं परिधापयेत् ॥११६॥
दक्षिणाभिनिन्यस्तैव (?) तन्तुसम्पातमेव च।
अहतं वासो यौवन वा सतन्तुपरिधापयेत् ॥११७॥

परिस्पैतिमंत्रेण यशसामास्तथैव च ।
सुमनसः प्रतिगृण्हीयाद्यशसा च भगेन च ॥११८॥
अथाव वन्धीते यद्यशोप्सरसा मिन्द्रश्चकारविपुलं प्रथु
तेन संग्रथिताः सुमनस आवबन्धामि ।
उष्णीषेण शिरोवेष्टय (वेष्टयित्वा) युवा सुवासाश्च मंत्रवित्
अलङ्कार(श्च,श्चैव (विविधैः) भूयोऽलङ्करणन्तथा ।
भूयासः कर्णवेष्ठं तु अक्ष्णोंजनं ततः परं ॥११९॥
वृ...सिकनीनस्य(?) अक्ष्णोऽञ्जनं विधीयते ।
रोचिष्णुरसीत्यात्मानं आदर्शे प्रेक्षणन्तथा ॥१२०॥
वृह...तेच्छदिरसिकन्न (?) प्रतिगृह्वै ततः ।
पाप्मनोमामत्तर्द्धे हि पादौ युग्मोपधाप्येत् ॥१२१॥
उपानहौ परिधाप्येवयुगपद्युगपत्तथा ।
वैणवंदण्डमादत्ते विश्वाभ्यो मति (मिति) मन्त्रवत् ॥१२२॥
दत्तप्रक्षालनादीनां छत्रोपानहमेव च ।
पूर्व्वाणि च जपेन्मन्त्रं परिधाप्य पुनः पुनः ॥१२३॥
स्नातस्य...भोत्युत्तेत्यकुयोनिः(?) पितामहः ।
कामेतरेण गन्तव्यं नृत्यगीतं विवर्जयेत् ॥१२४॥
शूद्रश्च...रायश्च (?) सदासंगति वर्जयेत् ।
वादित्राणि न कुर्वीत पटहादितथैव च ॥१२५॥
न गायेत्कामगीतानि वैष्णवं गीतमाचरेन् ।
रात्रौ न गम्यते क्षममक्षेमेनैव गम्यते ॥१२६॥

न धावेदुद्यानार्थं (न) न कर्मणि वर्जयेत्।
परस्त्रीगमनं वर्ज्यमुदयानेक्षणं (तथा) वर्जयेत् ॥१२७॥
वृक्षारोहणवर्ज्यश्च फलप्रचयनन्तथा।
सन्धिसर्पप्रवर्ज्यन्तु नग्नं स्नानं विवर्जयेत् ॥१२८॥
ऋतुमत्योपिनालापं तथा निष्ठुरभाषणम्।
अश्लीलवदनं चैव न कुर्वीत कदाचन ॥१२९॥
ऊर्ध्वात्मने मध्ये नावलोक्यते रविम्।
स्नात्वा भिक्षां प्रगन्तव्यं वाग्यतः स्नानमाचरेत् ॥१३०॥
सर्पत्येव न गन्तव्यं गन्तव्यं मन्त्रमुज्जपेत्।
अयम्मे यत्र पाप्मानमपहत्य अनेन मंत्रेण व्रजेत् ॥१३१॥
अप्स्वात्मानं नावेक्षेत कन्यातूपी च नो भवेत्।
विपु (वि) स्त्रिया न गच्छेतु प्रसूताकुचवर्जिता(?) ॥१३२॥
मत्युपोपिनाश्चैव तथा पिष्टं च नो हसेत् (?)।
षण्मासानि ममतीतानि गर्भे सहितयोषिता ॥१३३॥
सा स्त्रीगर्भिणी प्रोक्ता न रमेत कदाचन।
परं वन्ध्या न गन्तव्या त्यजेद्वन्ध्या परस्त्रियः ॥१३४॥
ज्ञानेनैव तु वक्तव्यं सकुलं न कुलं तथा।
भगाल(?)च कपालञ्च प्रसिद्धौ वाच्यता(म)पि ॥१३५॥
आखण्डलधनुश्चैव न निरीक्षेत कदाचन।
सौरभी च परस्मै च चोपमाना न वाच्यताम् ॥१३६॥
तिष्ठन्मनो न कुर्वीत तथा मूत्रपुरीषयोः।
स्वयं शीर्णेन काष्ठेन गुदद्वारं प्रमृज्यताम् ॥१३७॥

दृढ्वतो (i) वधत्रस्यात्सर्वेषां मित्रभि ।
तिस्रो रात्रिव्रतं कुर्यादमांसाशीर्भवेत्सदा ॥१३८॥
न भवेत्स्वाभून्मयपायी मद्यपा इति वर्ज्जयेत् ।
न स्नात्वा नैवपीत्वा तु सूर्यतप्तेन वारिणा ॥१३९॥
ऋतुस्नाता स्त्रियाः श्चैव सुरापी शूद्र(एव)व च ।
काकस्य च शुनश्चैव स्पर्शवादं विवर्ज्जयेत् ॥१४०॥
परचिन्ता न(च)कर्त्तव्या आत्मचिन्ता तु नित्यशः ।
अतीतं नैव शोच्येत न तु चिन्त्यमनागतम् ॥१४१॥
वर्तमानेन वर्त्तेत (त्तितव्ये) धर्मबुद्धि समाचरेत् ।
श्रुति स्मृतिरतो नित्यं दानाध्ययनतत्परः ॥१४२॥
पितृमातृगुरुर्विप्रनम्रीभूतं भवेत्सदा ।
मिथ्याव्रतं न कर्त्तव्यं मिथ्यादीक्षां विवर्जयेत् ॥१४३॥
समाप्ते ब्रह्मचर्यं च वेदेऽधीते तथैव च ।
उपयेमे ततः कन्यां ब्रा(ह्म)लक्षण संयुताम् ॥१४४॥
अतो विवाहयेत्कन्यां पितृमातृसमुद्भवाम् ।
सुशीलां गुणवतीञ्चैव दक्षां वा मितभाषिणीम् ॥१४५॥
पितृस्वसा च भगिनी भागिनेयी दुहितापतिः ।
एवं मातृपु विज्ञेया बान्धवाः परिकीर्त्तिताः ॥१४६॥
सप्तमी पितृतोज्ञेया पञ्चमी मातृतः परम् ।
पितृमातृस्वबन्धूनां दारकर्मणि वर्ज्जयेत् ॥१४७॥
पितुः पितृश्वसुः पुत्राः पितृमातृश्वसुः सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥१४८॥

मातु पितृस्वसु पुत्रा मातुमातुस्वसु सुता ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवा ॥१४९॥
यस्मिन्देशेषु ये विप्रा यावन्(तो) यत्रैव मृत्तिका ।
तेनैव ते पालनीया न ते दुष्या कदाचन ॥१५०॥
कुलीनस्फीता सुचारुगाता शुद्धज्ञानिमसुन्दरीम् ।
त्रीणि यस्य प्रलम्बन्ति ललाटमुदरं कटिम ॥१५१॥
कुलक्षयिणी भया दारकर्मणि वर्जयेत् ।
यथा पुत्री पतारम्भ तथा(पुत्र) निराशन्ति ततो भर ॥१५२॥
मन्दरोगयो निरावण दशदोषविवर्जित ।
अधम किल्विषी कुष्टी पतित क्लीब एनष ॥१५३॥
तन(अलक्ष्मीक) इव मायावी रागान्धो मूर्खोऽपि य ।
अपस्मारी कुलोच्छ्न कन्यादानेषु वर्जयेत् ॥१५४॥
कन्या दातु पिता योग्य अभाव मातृका (तर) तथा ।
भ्रातर मृतको दद्याद् गोत्रिणस्तु तत परम् ॥१५५॥
तथा लापनताकन्या न योज्या दारकर्मणि ।
एकशादरी एकशिरा(रा)का तथावैव कठोनरीम् ॥१५६॥
अति रोम्ना च निर्गोमतिगौरा च पाण्डुराम् ।
दैवदृक्नर्नामी तथा नररनामिकाम् । ॥१५७॥
न श्मश्रुन्य चनमन अगुष्ठाग (?) नीर दारा ।
हास्य च कृपगडांगोच(?)दोषाश्च षोडश ॥१५८॥
यचा (वाचा) स्चो (ना) मनोदना कृतशोभुकमगल ।
दम्पत्ताच तथा पाणि गृहीतौ क्रमयान्वितौ ॥१५९॥

अग्नि परिगताश्चैवपुनर्भू सप्तधा मता ।
सर्वासान्तु कुमारीणां गौरी शस्ता प्रयत्नतः ॥१६०॥
तामुद्वहेद् भेद सूर्यः(?)पितॄणां वाञ्छितः सुतः ।
अष्टवर्षा भवेद्गौरी नववर्षा च रोहिणी ॥१६१॥
दशवर्षा भवेत्कन्या अत ऊर्ध्वं रजस्वला ।
दशाब्दां कन्यकातीतां न वराय प्रयच्छति ॥१६२॥
मासि मासि रजस्तस्य पिता पिबति शोणितम् ।
दत्वैकस्मिन्गृहेकन्यामन्यस्मै तु प्रयच्छति ॥१६३॥
स्व(तत)कुलं नरकं याति यावदाभूतसंप्लवम् ।
परदत्तां प्रदुष्टां वा (त्वथ वा)छद्मना हृताम् ॥१६४॥
रोहिणीं दण्डिनीयस्य शोनाख्याय युयच्छति(?)(प्रयच्छति) ।
बलादुपहृतां कन्यां कोवा कस्मै प्रयच्छति ॥१६५॥
अप्रमाणस्तु (णातु) सा ज्ञेया वरमन्यम्प्रदापयेत् ।
छलेनापहृता कन्या चोरैर्यदि विवाहिता ॥१६६॥
अन्यस्मै विधिवद्देया यथाकन्या तथैव सा ।
नोच्यते चवयिः(चपतिः)सद्भिश्छलेनापि विवाहिता ॥१६७
पितृदत्तातुयाकन्या पाणिग्राहणिकोच्यते ।
विवाहोऽष्टविधः प्रोक्तो ब्रह्मणा परमेष्ठिना ॥१६८॥
ब्राह्मो दैवस्तथाचार्षः प्राजापत्यस्तथापरः ।
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥१६९॥
आहूयालङ्कृतांदद्याद्विवाहो ब्राह्म उच्यते ।
तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥१७०॥

यसम्य ऋत्विन कन्यायोऽन्दक्षत्य प्रदास्यति ।
सदैव ॥ भवद्यो पुनात्युभयतो नर ॥१७१॥
गृहीत्वा गोद्वय कन्यां आर्षस्य परिकीर्तित ।
विवाह पुरुषान्दश पुनात्युभयतो दश ॥१७२॥
इत्यर्थिने समभ्यर्च्य प्रयच्छेत सहात्मिकाम् ।
प्राजापत्य भविवत्र पुनाति सनवोभयो ॥१७३॥
नार्थेनन्द्रविणाग्नाद्विवाहआसुरो मत ।
राक्षसो युद्धहरणात्पैशाच कन्यकाछलात् ॥१७४॥
गान्धर्वादि विवाहेषु पुनर्वैवाहिको द्विज ।
चत्वार प्रथम शस्ता विवाहा विप्रजातिषु ॥१७५॥
क्षत्रियस्य द्वयश्चैव शस्तौ गान्धर्वराक्षसौ ।
ययोरेवसमर्यातियो क्षत्रैव समकुलम् ॥१७६॥
गान्धर्वस्तु स विज्ञेयो विवाह क्षत्रियोमत ।
आसुरो भवितम्यत्र निम्नाणामुभावपि (?) ॥१७७॥
पैशाचश्चाष्टम सर्वे न कर्तव्योऽधमो यत ।
पैतम(?)दत्ता परात्मना परिवर्त्तनं करोति य ॥१७८॥
तेषान्तु नरक घोरे पितृणा सहितास्तथा ।
दत्वा (त्वा) येन विवाहेषु आत्मीया च परामुना ॥१७९॥
आ मा विवाहिताय(ते)न भागिनेय(स्वतत्सुत )भगिनीं य ।
ज्येष्ठेन ज्येष्टया कार्यं नूनायों पाणिपीडनम् ॥१८०॥
तयोरेकान्तर ज्येष्ठ ज्येष्ठ न च विरु ध्यते ।
द्विवे गुरौ धने सूर्ये नष्टे शुक्रबृहस्पती ॥१८१॥

विवाहादौ न कर्त्तव्यं कुर्याद्वै कुण्ठपौष्टिकम् ।
संसज्जने प्राशने च नारायणवलिः क्रियाः ॥१८२॥
वैष्णवोन्नापनञ्चैव सीमन्तं कारयेन्छिशोः (शिशुम) ।
द्वादशेचाष्टमे वर्षे देवाचार्यौ चतुर्थके ॥१८३॥
सपूज्ये वा अपूज्ये वा हितं प्राणनाशनम् ।
पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ॥१८४॥
वृद्धत्वे पुत्रगोत्री वा न स्त्री स्वातन्त्र्यमर्हति ।
कुविवाहैः क्रियालोपैः वेदानध्ययनेन च ॥१८५॥
कुलान्यकुलतां यान्ति संतानश्चैव शूद्रताम् ।
तत्रादौ मधुपर्कस्य विधिं ब्रह्मण्य नोदिता ॥१८६॥
अर्चयामि भवान्साधुः साधुवाच्यैर्चयः परम् ।
विष्टरग्रहणं चैव त्रिरुक्तमपिमान्वयम् (?) ॥१८७॥
कुशपञ्चाशको ब्रह्मा तदर्धं विष्टरं स्मृतम् ।
तदर्धमासनं प्रोक्तं तदर्धमर्घ्यं विन्यसेत् ॥१८८॥
पाद्यं सुखोपविष्टश्च पादार्घ्यमुपकल्पयेत् ।
दक्षिणं चरणं क्षाल्यविराजोदोहोऽसि मंत्रतः ॥१८९॥
योगीस्थ इदं श्रुत्वा पुनरूचुस्ततोद्विजाः ।
पाद्यं चैव विराजश्च तथाऽर्घ्यं विधिना विभो ॥१९०॥
मधुपर्कं विधानं च ये मंत्रा याश्च ओषधीः ।
काश्चधेनुर्विराजश्च विराजः कथमुच्यते ॥१९१॥
गायत्र्या गृहीयाल्लाजाः गन्धद्वारेतिकुंकुमम् ।
पुष्पं पुष्पवती चैव अतद्विष्णुस्तुतण्डुलान् ॥१९२॥

या ओषधी सर्वौषधीं मन्त्रेण विनिक्षिपेत् ।
धर्मो धेनुर्द्विजोत्तम कन्य (?) दुग्धेन दुह्यताम् ॥१६३॥
धेनुस्तस्य निरानस्य तद्विरात्र मन्त्रस्तृत्यम् ।
आरक्षीर कुशाग्राणि दधि च तिल तण्डुलम् ॥१६४॥
यव सिद्धार्थकाश्चैव अर्घ्यो (र्घ्यं) मष्टाङ्गमुच्यते ।
पात्र पश्चिमदिग्भागे मधि(?)चाप्यानेत्वापनिक्षिपेत्॥१६५
पय पृथिव्या तु पय क्षीर दक्षिणत क्षिपेत् ।
कुशा उत्तरतो प्राह्यो देवस्यत्वोक्तनानि च ॥१६६॥
पात्रण पूर्वतश्चैव दधिक्राव्णेति मन्त्रयम् ।
तिलोऽसि पितृदेवत्यो पात्रवाय यतोनत्वा (न्यसेत्) ॥१६७
आममन्नपतेश्चैव ईशाने तण्डुलान्क्षिपेत् ।
मानस्तोकेति मन्त्रण+आग्नेय्या सर्षपान्तथा ॥१६८॥
यवोऽसियवाश्चैव नैर्ऋत्यते च क्षपेद्वृधनि ।
आपस्यश्चैवतुस्मा भि अर्घ्यं गृहीत्वाति वै तत ॥१६९॥
मन्त्राकामेति मन्त्रणार्घ्यपात्र ममाहरेत् ।
निनयर्नभमन्त्रयत अर्घ्या(?)अस्माक यन्त् ॥१७०॥
नत्वं शिरसा कुर्यान्नमस्कारविधानत ।
परिधाय कर्णौ (र्णौ) इर्वेव चरणोर्ध्वं विनिक्षिपेत् ॥१७१॥
काव्यपात्र ममायुक्त दधिमधुघृतैर्युतम् ।
मधुरक्क मन्त्रेत्र मित्रस्यन्वा प्रतीक्षणी ॥१७२॥
पल्मक वृत धाता द्विपद दधि च्यते ।
पल्कन्नु मश्चैव पर्योध्वं कास्यसंस्थितम् ॥१७३॥

देशस्यत्वेति गृह्णीयात्सव्येपाणौ निधापयेत् ।
दक्षिणस्यानामिकायाभि प्रयूतिश्चमंत्रवित ॥२०४॥
नमः स्वाद्याभ्यायां नाशने धत्त आविद्धतः ।
तत्तं निःक्रममाणन्तु मंत्रोऽयं परिकीर्त्तितः ॥२०५॥
अनामिकांगुष्ठाधो गौरिर्त्रिस्त्रिरीक्ष्ययति(च) तथा ।
मधुपर्कं ततः कुर्यात्त्रिः प्राश्यातिविधानतः ॥२०६॥
यन्मधुनेति मंत्रेण मधुमतीर्वा ऋचंप्रति ।
ऋचं मधुमती प्राश्यऋत्विजो यज्ञकर्मणि ॥२०७॥
प्राशयेन प्रथन्वेन यन्मनोद्यावाह्यकः (?) ।
उच्छिष्टन्तु ततोदद्यात्पुत्रान्ते वासिनामपि ॥२०८॥
शिष्याय ऋत्विजोदद्य पुत्रेनृपप्रियैः(पुत्राय च पितातथा) ।
आसीनाद्यः दद्देक्षौरिः(?)स्नातकश्चोत्तरंदिशि ॥२०९॥
वरं प्राशयते सर्वं सर्वं वा पूर्वं निक्षिपेत् ।
उच्छिष्टमपि कर्त्तव्यं पाणी संमृशते ततः ॥२१०॥
वाङ्मआस्येनसोश्चक्षुकर्णायोश्रोत्रमेव च ।
बाह्वोर्म्मेवल्वमूर्व्वे ॐ जोरिष्यानिमेतथा ॥२११॥
अंगानि व तन्श्चैव तन्वामे सहमेव च ।
आचान्तः शासमादायशासं शासन उच्यते ॥२१२॥
तदर्थंतुगवालम्भं गौरितित्रिः प्रहार्यताम् ।
गावोऽपिशासनं प्रोक्तं गावश्चत्रिभिर्वाच्यताम् ॥२१३॥
माता चैव तु रुद्राणां वसूनां दुहिता तथा ।
आदित्यानां स्वसा चैवत्यभिस्यामृतमेव च ॥२१४॥

हिरण्यवर्णोविकेर्णः (?) सत्वामन्मसांकरोत् ।
असावितितमगृण्हातु अथैने च समीक्षयेत् ॥२२४॥
उभावपि समालोच्य मन्त्रवच्चक्षुमेलकम् ।
अव्घोरचक्षुरपधिः मंत्रं जप्त्वा समादिशेत् ॥२२५॥
द्विजोदधिसमालोक्य वाणं गृह्णातिवाहुजः ।
वैश्येप्रतोदमादायहस्तौशूद्रस्यमेलकः ॥२२६॥
ततोदर्भगृहीत्वादग्ने दक्षिणतःस्थितः ।
अग्नेः प्रदक्षिणं कृत्वा तजेन्नीवा(वी) कटाविशेत्(?)॥२२७॥
अन्वारब्धौ तथाघारौआज्यभागौ तथैव च ।
महाव्याहृतयश्चैव पंचवानुकणन्तथा ॥२२८॥
जाग्नचमृद्वादशांहुत्वा वितीनां च त्रयोदश ।
अच्छादशाग्निभूतानां पश्चानामग्निरैतुकाः ॥२२९॥
लाजाहुतीदशप्रोक्ताः प्राजापत्यमतः परम् ।
वामे पत्नीसमादाय त्रिधाभिमुखं व्रजेत् ॥२३०॥
सप्तकूटानिधान्यानि मन्त्रंजप्त्वाव(च) रोहणम् ।
एकामपेद्व ऊर्ज्जेत्रीणिरायस्पोपाय एव च ॥२३१॥
मयोमवायचत्वारिपशुभ्यः पश्चमुच्चरेत् ।
पड्ऋतुभ्यः सखः सप्तसामामनुव्रता भव ॥२३२॥
निष्क्रम्यकल्पितं कुम्भं उदकेनाभिषेचनम् ।
आपः शिवेतिमन्त्रेण आपोहिष्टातथैव च ॥२३३॥
तथासूर्यमुदीक्ष्यै व तच्चक्षुर्म्मंत्रंविवर्ज्जयेत् ।
दक्षिणांसेनमालभ्यममव्रतेत्युदाहरेत् ॥२३४॥

सुमंगलीरियंवधूरिमां समेतपश्यता ।
सौभाग्यमस्यैदत्त्वा वृद्धास्त्री विरमेत्तत ॥२३५॥
तोन्दद्वपुग्पोम्मश्च(?)अर्केनादाय वैतत ।
अनुगुप्तं तदागारं प्राच्योनोदीच्यमेव च ॥२३६॥
स्त्रोत्सगे समादाय अनड्वो च(?)रोहिते ।
उपविश्यतु तत्रैव सपत्नीकामभीप्सत ॥२३७॥
इहगावो निषीदन्तु मन्त्रोऽयं समुदीरयेत् ।
पूर्णान्ते स्विष्टकृदीज्ये प्रामथरात शुभोच्यते ॥२३८॥
यरदार्न तत प्राक्तं ध्रुवदर्शनमेव च ।
प्राशनमार्जन दान विवाहाय जुहोत्यत ॥२३९॥
कर्मान्ते च प्रदानव्या आहुतीना चतुर्दश ।
आचार्यं सर्वकर्म्मसु आत्मन श्रेयमिच्छति ॥२४०॥
आचतुर्थे तु सम्पूर्णं विवाहादौ तथैव च ।
भू शुद्धि प्रथमकुर्यात्कुशात्रयसमृद्धनम् ॥२४१॥
अङ्गुष्ठानामिकाभ्या च गृहीत्वा तु कुशानगम ।
दक्षिणयोत्तर कुर्यात्परि समूहविधो(धिरुच्यते,च्यते ॥२४२
गोमयेन ततो लिप्य तिस्रोल्लिख्य (लिखित्वा) विधानत ।
तदुन्त्यङ्गुष्ठयोगेन उद्धृत्योद्धृत्य सक्षित ॥२४३॥
उदकेनाभिमन्त्र्यायाग्न्याधान तत परम् ।
मन्त्रविद्ध ब्रह्मस्थाप्याग्निर्दक्षिणत सदा ॥२४४॥
निरस्त परासे सहमधावसौ सदने सीदामीत्युप विशेत ।
तत्र ब्रह्मोपवशान अग्नेरुत्तरत स्थाप्य प्रणीतासन वाग्यत ॥

द्युनर्विश्रामसंस्थाप्य(?)प्रणीतापात्र　दारुजम् ।
आत्मासनं　ततोदद्यात्प्रणीताकरसंस्थिता　॥२४६॥
तत उदकं समादाय गायत्र्या चाभिमंत्रितम् ।
प्रणीता पूर्णं　तत्रदर्भैराच्छादयेत्ततः　॥२४७॥
विश्रामासनं संस्थाप्य प्रणीतालम्भनं　तनः ।
ब्रह्मणोमुखमालोक्य　निधायोत्तर एव च　॥२४८॥
वाग्यतः परिस्तीर्य्य प्रबलादेशतः　कुशः ।
हव्यवाहनवस्त्रोऽयं त्रिवाचश्च　चतुर्दिशम्　॥२४९॥
वस्त्रहीनेन यः कुर्याज्जातवेदास्तनूनपात ।
विपरीत(?)फलन्तस्य आप्नं तत्रवै ध्रुवम्　॥२५०॥
पात्राणासादनं(?)तत्र　आर्दौदर्भत्रयन्तथा ।
द्विदर्भे प्रोक्षणीपात्रं आज्यस्थाली ततः　परम ॥२५१॥
चरूस्थालीं ततः स्थाप्यसंमा पात्रन्तु　वर्जयेत ।
सव्येनोदक　संस्पर्शः　प्रणवोच्चारततपरः ॥२५२॥
अग्ने कुशपश्च उपयमनकुशाः सप्तादेशात्समिधस्त्रिभिः ।
ग्यादिरेणस्र् वः स्थाप्य स आज्यं स्थाप्य विधानतः ॥
तण्डुलावैश्वदेवान्नं　पूर्णपात्रन्तु　विन्यसेत् ।
अष्टमुष्टि　भवेत्किञ्चिदष्टौ　च　पुष्कलः　॥२५३॥
पुष्कलानि　च　चत्वारि　पूर्णपात्रं　विधीयते ।
तत्र त्रीन् कुशानास्तीर्यैक देशोर्द्ध कुशद्वयम्　॥२५४॥
अथाद्र्धोधद्वयं कुर्यास्त्रीणि　त्रय　कृतोऽच्छिनत् ।
कुशै. कुशावच्छिन्नन्ति द्वे कुर्यात्तु　पवित्रकम् ॥२५५॥

वरो दास्यति पूर्वेण प्रणीयोत्तरवन्हिना।
अग्निराज्यन्तरं कुर्यात्स्थापयेच्चोत्तरे दिशि ॥२६७॥
प्रणीतापश्चिमेन्यस्य आज्यवन्हि तथान्तरे।
उत्तरेचाप्य संस्थाप्य आज्यमुत्पवनन्ततः ॥२६८॥
आलिखेन् पवित्रे च प्रोक्षण्योत्प (ण्युत्पवनं) वनंविधिः।
आज्यावेक्षणं संस्कुर्यादपद्रव्यनिरासनम ॥२६९॥
उपयमनकुशानादाय दक्षिणं कटि विन्यसेत्।
उत्तिष्ठसमिधंक्षिप्य ण्पाते अग्रे समित् ॥२७०॥
प्रणीताकुशमादाय यज्ञाब्राह्मण (?) चेततः।
अन्वारम्भन्ततः कुर्यादाचार्यः ब्रह्म वाग्यतः ॥२७१॥
प्रोक्षण्योदकसम्प्रोक्ष्य स्रु वहोमं समाचरेत्।
द्रुहिणेन इदं प्रोक्तं अग्निस्थापनकं विधिः ॥२७२॥
प्राजापत्योत्तरेन्द्राग्ने दक्षिणेन्द्रीश मिन्द्री (द्र) य ।
आग्नेयेऽग्निमुखौ दद्यादीशाने सोमचक्षुषी ॥२७३॥
अग्निं स्थाप्यविधानेन दशाङ्गाग्निकलायुतम्।
धूम्राचनीलवर्णा च कपिला विस्फुलिंगिनी ॥२७४॥
ज्वाला हविष्मती चैव कव्यवाहव्यवाहिनी।
रौद्री संहारिणी चैव वैश्वानरकला दश ॥२७५॥
विवाहे च तथा क्षौरे चतुर्थादीक्षणे शुभे।
गृहयोगे शुभे कर्म्मणि दशांगं वन्हि विन्यसेत् ॥२७६॥
कव्यवाट् पूर्वं विन्यस्य हव्यवाट् दक्षिणेन्यसेत्।
ज्वाला च पश्चिमे न्यस्य अर्चिष्मां उत्तरे तथा ॥२७७॥

पडग्नलामूर्ध्नि चिन्त्यग्स्याद्दाज्याहुती ततः ।
पूर्वं दद्यादाघारौ आज्यभागौ तयोत्तरे ॥२७८॥
अग्नेर्थायाप्रायश्चित्तं सूर्यश्चन्द्रस्तथैव च ।
गन्धर्वं प्रायश्चित्ते तु पतिघ्नी प्रजाघ्नी स्तथा ॥२७९॥
पशुघ्नी च गृहघ्नी च यशोघ्नी च क्रमेण तु ।
प्राजापत्ये स्विष्टकृते स्थालीपाकं जुहोति च ॥२८०॥
व्याहृतिश्चततः आज्ये हुत्वापश्चयाज्यकन्तथा ।
हुतशेषं चरुस्थाली पाक (कृत्वा) निधानतः ॥२८१॥
हुत्वा स्त्रिया भुक्तत्रमन्त्रेणानेनवै ततः ।
प्राणैस्ते प्राणान्सन्दधाम्यस्थिभिरस्थीन्येव च ॥२८२॥
मांस चैव मांसेन त्वचा त्वचमिति क्रमात् ।
इत्यालम्भन कुर्यात्तु(?)शीचन्द्रमेव च ॥२८३॥
पश्येमशरदः शतम्शतेन्मत्र द्विजोत्तम ।
गर्भाधानक्रिय यस्य पुष्पवत्यास्तथैव च ॥२८४॥
चतुर्थ्याऽध्वं सा स्नाता न गर्भं दधाति यदि ।
सिद्धाभुक्तिणीदेवता (?) दुपोष्या तु विधानतः ॥२८५॥
पुष्यन (ण) मूल मुत्याप्य चतुर्थ्यें स्नानपूर्वकम् ।
निशायामुदके पिण्प(? नस्य कुर्याद्यथोचितम् ॥२८६॥
दक्षिणस्यानामिकया सिञ्चतीत्योषधी त्वया ।
इयमोषधीत्रामात्री(? सहमाना सरस्वती ॥२८७॥
जग्या अह बृहस्याश्वपुत्र पितुरिव तथा ।
पितुरिव नाम जग्राह ऋतुस्थाने प्रकीर्त्तितम् ॥२८८॥

स्त्रीणां सर्वक्रियारम्भे ऋतुगोचरतः शुभम् ।
शुद्धाभर्त्तरि शुद्धा वा गर्भाधानादि कर्म्मसु ॥२८६॥
युग्मारात्रिषु कृतस्नाना कृतमाल्यविभूषणा ।
भुक्त्वाकदर्प्यक(कंदर्पकं)श्चैव स्वकान्तकामिनी व्रजेत् २६०
ऋतुस्वभाविनी स्त्रीणां रात्रयः षोडशस्मृताः ।
चतुर्थ्यां जायते पुत्रःस्वगु(?)र्गुणवर्ज्जितः ॥२६१॥
विद्यादारपरिभ्रष्टोदारिद्र्यं क्लेशभागिनः ।
पञ्चमे पुत्रिणीकन्या षष्ठे पुत्रश्च पुत्रवान् ॥२६२॥
सप्तमे शुभगा कन्या अष्टमे ईश्वरः सुतः ।
नवमे अग्रजा कन्या दशमे पुरुषोत्तमः ॥२६३॥
एकादशे भवेत्पुत्री द्वादशे पुत्रधर्म्मिणः ।
त्रयोदशे भवेत्कन्या वहुदु ग्वभयप्रदा ॥२६४॥
धर्म्मज्ञश्च कृतज्ञश्च शास्त्रज्ञश्च महीपतिः ।
जायते चतुर्दशान्ते सर्वभोगरतो नरः ॥२६५॥
राजपत्नी महाभागा राजवत्सकरी शुभा ।
जायते पञ्च दशांते (च) वहु भोगा पतिव्रता ॥२६६॥
विद्याविनीतः सम्पन्नो भोगवान्सुकृती नरः ।
जायते षोडश्यां रात्रौ सत्यवादी जितेन्द्रियः ॥२६७॥
अष्टमी नवमी चैव चतुर्दशी च पूर्णिमा ।
एतास्तु तिथयो वर्ज्या शेषाः श्रेष्ठोत्तमाः स्मृताः ॥२६८॥
मघामूलाश्विनी ज्येष्टा अश्लेषा रेवती स्तथा ।
रतिकाले सदावर्ज्यं (र्ज्या) ऋतुस्नाने विशेषतः ॥२६६॥

यस्मिनृक्षे च आधानं ऋतुकालप्रपोषणम् ।
तस्माद्वै दशमे ऋक्ष प्रभृति भवति स्फुटम् ॥३००॥
हीनांगोवधिरो मूकोवक्र पङ्गुरथ वामन ।
गर्भाधानेऽपि जायन्ते वैकल्य मानस यदि ॥३०१॥
मत्येत्यमौन(?)अविरु न किञ्चित्
षष्ठीवत्वभाव प्रतियाति गर्भ ।
अन्ये तु पिण्डाधपनप्रभेद्
विधि प्रकार युगलाद्या(?)जीरम्(ते)॥३०२॥
इति रजलक्षण —
अथात पुसवनम्—
पुराणचन्दनकर्मणि—
मासे द्वितीये तृतीये वा पुंसानक्षत्रे यदि ।
चन्द्रमापूर्यमानात् समुपोष्य यथा विधि ॥३०३॥
आप्लाव्याहतेवस्त्र परिधाय विधानत ।
न्यग्रोधावरोहे शुद्धानिशायासु(?) पयपणम् ॥३०४॥
आसेचनं पूर्ववत्कुर्याद्धिरण्याद्भ्य समृतम् ।
एताभ्या कुशकण्ठेन सोम सिञ्चयेत्तया ॥३०५॥
कूर्नपित्तयोअस्येक(?)यदि कामतोऽपिवा।
पोर्यवान्याद्दितिचहतेनैवाभिमन्त्रयेत् ॥३०६॥
सुपर्णोऽसीति(?)ष्णु मम परिकल्पयेत् ।
प्रथमे गर्भेऽष्टमे मासि षष्ठ वा स्थाप्य वन्दिता ॥३०७॥
तिल तण्डुलमुद्गाश्च मिश्रिता स्थाप्य वै द्विज ।
स्थालीपाक तत कुर्याद्यथा पूर्व विधानत ॥३०८॥

प्रजापत्येस्विष्टकृते प्राशनान्ते ततः परम ।
भद्रपीठोपविष्टः सासटाग्रुग्मेनो(?)दुम्बरी ॥३०६॥
त्रयोदर्भाश्च पिञ्जुल्यां शल्ल्याः कण्टकन्तथा ।
वीरतरुशंकुनास्चैव पूर्णपात्रं तथैव च ॥३१०॥
एकीकृत्य चैतेषां महारंगेन वेष्टयेत् ।
महाव्याहृतिभिश्चैव सीमन्ते मूर्ध्नि एव च ॥३११॥
कुर्याद्विनयनं तत्र उर्जीव फलिनी भवेत् ।
अथाहवीणाजथितौ राजानः समायताम् ॥३१२॥
नदीसानामं गृह्णाति ततो ब्राह्मण भोजनम् ।
राजतैदशमाश्चैवगर्भेजरिपुणा (?) सह ॥३१३॥
एकादश ऋचां जप्त्वा अछित्प्राङ्ग(?)एव च ।
सुवर्णान्तर्हित घृते प्राश्य वै शिशुम् ॥३१४॥
मन्त्रेणानेन वै तत्र भूर्भुवः स्वस्तथैव च ।
नाभ्या(भौ)न्वा दक्षिणे कर्णे आयुष्यं मंत्र विज्ञपेत् ॥३१५॥
अग्निः सोम स्तथावायुर्ब्रह्मादयो देवास्तथैव च ।
ऋषयश्च पितरश्चैव यज्ञसाग (र) वैं जपेत् ॥३१६॥
वनस्पत्योषधीश्चब्राह्मणेभ्यस्तथैव च ।
अमृते(ने)व्रते स्वधाः चैव दक्षिणा सत्त्वं तिपु(?)॥३१७॥
आयुष्यकरणं प्रोक्तं ब्रह्मणा परमेष्ठिना ।
स यदि कामयेच्चैव सर्वमायुरियादिति ॥३१८॥
वात्कें प्रेणी ततोजप्त्वा अनुवाकादिवं स्वती ।
पञ्च ब्राह्मणानुत्थाप्य पूर्वदक्षिणा पश्चिमे ॥३१९॥

सर्पपावरुणा चैव स्वाहान्ते च उभावपि ।
कुमारो पदवेश्नस्तु जातेनाच्छादितस्ततः ॥३३१॥
पिता स्वांके समादाय जपेन्मत्र(न्तु) स्तुकूर्कुरम् ।
कूर्कुरः स कूक्कुरश्चपत्तं देवा विरमं विदुः ॥
त त्वं कुमारमेववावृणीथा स्तथैव च ।
चेच्चेचपुनरवेर्क्के श्याम शवलौ प्रकीर्त्तितौ ॥
अनागमन्नरोदिष्टे यत्र वाभि मृशांमसीति ।
दशमेऽहनिसमुत्थाप्य पितानाम करोति च ॥३३२॥
द्विरक्षरं चतुर्व्वापि घोष पदाद्य(वाद्या)नन्तरतस्तथा ।
दीर्घाभिन भिनष्टानं न(?) कृतं कुर्यान्नतद्धितम् ॥३३३॥
आयुश्च चिरमाचारं तत्र स्त्रिया न तद्धितम् ।
शर्म्मेति ब्राह्मणोब्रूयाद्वर्म्मक्षत्रिय एव च ॥३३४॥
गुप्ते ति वैश्येविज्ञेयं ततो ब्राह्मणभोजनम् ।
मासे चतुर्थे निष्क्रम्य सूर्यमुद्वीक्षयेत् ततः ॥३३५॥
तच्चक्षुश्च ऋचां जप्त्वा प्रोक्ष्यरश्मनोदकरश्मिषु ।
गृहानुपयतो तिष्ठं ततो ब्राह्मणभोजनम् ॥३३६॥
अन्नप्राशनं (तु) विज्ञेयं मासि षष्ठे तथैव च ।
पूर्व्ववदग्निं संस्थाप्य स्थालीपाकं समाचरेत् ॥३३७॥
आघाराघाज्यभागौ च तथा हुत्वा उभावपि ।
देवीवाचमजनयन्त वाजोना अद्यएवच ॥३३८॥
स्थालीपाकं ततो हुत्वा चतस्र आहुतयस्तथा ।
प्राणोनामशीयश्च अपाने नगधमेव (?) च ॥३३९॥

चक्षुषा रूपाणि श्चैव श्रोत्रेण यशोमशीय।
प्राजापत्ये स्विष्टकृते व्याहृती पञ्चवारुणीं ॥३४०॥
स्थालीपाक तत शस्तं हन्तकारश्च पूर्वकम्।
सर्वेषां तु रसान्पश्च मत्स्यमांसं विशेषत ॥३४१॥
एकीकृत्य तत प्राश्य अन्नपर्याय उच्यते।
भारद्वाजोवाश्रसार आयद्यैवकपिञ्जल ॥३४२॥
कृक सा (लाप) या आयु काम मत्स्यैर्नयनकस्तथा।
ब्रह्मवर्चं स आचारश्च सर्व्वस्य(?)काम्यकम् ॥३४३॥
अन्नप्राशन विज्ञेय ततो ब्राह्मणभोजनम्।
सम्वत्सरे तृतीये वा चूडाकर्म विधीयते ॥३४४॥
मातृणां पूजनम्पूर्वं ब्राह्मणान्भोजयेत्तत।
अग्निस्थाप्य यथाप्रोक्तं धयाद्याधारमाहुतौ ॥३४५॥
आज्याहुतिना सम्कृत्य वारुणान्तश्च चिन्हिता।
परियाप्याहृतं यत्र आप्लवं वाससी तथा ॥३४६॥
माता कुमारमादाय पश्चाद्दाने(स्थाने)रूप(उप)वेशयेत्।
पुनराज्याहुतीर्दद्यात् ब्रह्मणा परिकीर्त्तिता ॥३४७॥
शीतोदक तु सस्कृत्य उष्णेनैव तु वारिणा।
मन्त्रेणानेन वै तत्र शीतोष्णं कारयेत्तत ॥३४८॥
उष्णनवाप्युदके (?) स्वक्नेनहादितेशान्वपेन्।
नवनीतं घृत वापि दधि वा प्राशयमेव च ॥३४९॥
गोदा(?)दक्षिणमादाय उन्दनं मन्त्रविसत।
सवित्रा प्रसूमता दैव्या आ उन्दन्तु ने नन् ॥

दीर्घायुत्वाय सर्वलोशतत्पा कण्ठयं श्येनं विनीतं।
यत्रि पाल्यनाम् अमलय (मंगलयद्वं) गृभंस्तु ॥
पितु त्वं ओषधयः केशानगृहीन।
गोक्षुरं समाद्वाय शिवो नामेति मंत्रवान् ॥३५०॥
विनिवर्नयामिनियवं येना वयन्नाविना तथा।
येना वपत्सविताक्षुरेण सोमस्य राज्ञोवरुणस्य ॥
विद्वां तनब्रह्मणो वयन्ते दमस्यायुष्यं जरदृष्टिर्यथासत
उन्दनेकेशामूलेतुमध्ये विनयनं स्पृतम छेदनं नापस्तु पूर्ववत
गोदा पश्चिममादाय उन्दनादि प्रकारयेत।
छन्दनं च (चैव) आयुष्यं वैदिके न प्रकारतः ॥३५१॥
तत्रैव च द्वयं तूष्णीमुन्दनादि विधि तथा।
उत्तर गोदा संगृह्य उन्दनादि यथोचितम ॥३५२॥
येन भूरिश्चरान्दिवंज्योचापरत द्वयम्।
येन भूरिश्चरा दिवज्यो कुपश्चाधि सूर्यतने ॥
ते वपाभि ब्रह्मजीवजीवनाय सुश्लोक्ययस्वस्त्ययइति।
यक्षुरेण मज्जयता सुपेक्षसा वप्त्वा परिहार्यताम् ॥
यक्षुरेण मज्जयता सुपेशासा वप्त्वा वावपति।
केशांश्छिन्धि शिनामासायु. प्रमोपधीर्मुखमिति च केशान्ते
नाभिरद्भिः शिरोमुख्यत्रापिताय क्षुरं ददौ।
आक्षरं वपतीति प्रेषः वपामितित्तु नापितः ॥
यथामंगलकेशाश्च केशशेषं प्रकारयेत्।
अनुगुप्तमेतत्केशां गोमयेपिण्डसन्निधौ ॥३५३॥

गोष्ठे वा पल्वलेऽपि उदकान्ते निधापयेत् ।
आचार्य पितरं(?) बद्वा केशान्ते च तथैव हि ॥३५४॥
पुष्येचाश्विनिरेवत्यां मृगेवाप्युत्तरायणम् ।
हस्तविष्णुधनिष्ठाश्च क्षौरकर्म्मणि पुनर्वसु ॥३५५॥
अथकर्णवेध (ध) वर्षे तृतीये पश्चमे तथा ।
पुष्येन्दुरेवतीचित्रा हरिहर्क्षे तथैव च ॥३५६॥
प्राङ मुखश्चैव पूर्वाण्हे उपविश्य यथाविधि ।
तत्रादौ दक्षिण कर्णमभिमन्त्र्य तु मन्त्रवित् ॥३५७॥
भद्र कर्णेभि सवित्रास्तस्माय तत परम् ।
मन्त्रयत्स्वणासच्छिद्य पूर्व ब्रह्मणभोजनम् ॥३५८॥
गर्भाधान पुमवन स्पन्दन च निमित्तकम् ।
जातकर्म च नाम च सूर्यविक्षणकस्तथा ॥३५९॥
अन्नप्राशन चूडा च कर्णवेधस्तथैव च ।
ब्रह्मसूत्रोपनयन व्रत विसर्जन (ग) मत परम् ॥३६०॥
केशान्तश्च विवाहश्च चतुर्थीकर्म एव च ।
अग्नि समारणश्चैव सस्कारणि च षोडश ॥३६१॥

इति भाग्रब्रह्मणीते याज्ञवल्क्येधर्मशास्त्रे सस्कारप्रकरणमूनाम अष्टमोऽध्याय ।

---

# अथ नवमोऽध्यायः

## तिथिनिर्णयवर्णनम्

गृहस्थस्य व्रतं वक्ष्ये सर्वाभीष्टफलप्रदम् ।
स्त्रियाश्च पुरुषस्यैव यथाते (?) ब्रह्मचारिणः ॥१॥
प्रतिपत्तु द्वितीया स्यात् द्वितीया प्रतिपद्युता ।
कार्या द्वितीया सार्द्धन्तु तृतीया न कदाचन ॥२॥
चतुर्थी संयुताकार्या तृतीया च चतुर्थीका ।
पञ्चमी च चतुर्थी च कार्या षष्ठ्या न संयुता ॥३॥
नाष्टमी सप्तमीयुक्ता सप्तमी नाष्टमीयुता ।
नवमी सह कर्त्तव्या अष्टमी नवमी तथा ॥४॥
युगाग्निर्युगभूतानि षण्मुनिर्वसुरन्ध्रयोः ।
द्वादश्यैकादशी युक्ता चतुर्दश्या तु पौर्णिमा (पूर्णिमा) ॥५॥
प्रतिपच्च अमावास्यातिथियुग्मंमहाफलम् ।
योदेवानागमेदद्यात्पितृन्दद्याच्च निर्गमे ॥६॥
स नरः क्षुत्पिपासार्त्तो भवेज्जन्मनि जन्मनि ।
यां तिथिं समनुप्राप्य याति चास्तं दिवाकरः ॥७॥
सा तिथिः सकलाज्ञेया पितृदेवेषु सर्वदा ।
मुहूर्त्तंद्वादशी न स्यात् तत्रयोदश्यां यदामुने ॥८॥
उपोष्य द्वादशीमिश्रो सदोपोष्यैकादशीमता ।
न पक्ष भक्षये तृप्तिर्विदेहं च पत्रिणः ॥९॥

एकादशीं परित्यज्य नोपवासफलं लभेत्।
यथा बहुमनुष्याणां मध्ये पिण्डं समाश्रयम् ॥१०॥
द्वादशी दशमीविद्धज्जीवमेकादशी व्रतम्।
एकादशी दिनं यत्र निराहारं भवत्सदा ॥११॥
यानि यानीह पापानि अन्नमाश्रित्य तिष्ठति।
द्वादश्यामुपवासन्तु ये प्रकुर्वन्ति मानवा ॥१२॥
ते विष्णु नैव जानन्ति वृथा विष्णुपरायणा।
एकादश्या विना मूढैर्यै कृतं द्वादशीव्रतम् ॥१३॥
भुक्तं चान्न त्रयोदश्या तैः कृत कोटिगोवध।
द्वादशी तु यदोपोष्या विना एकादशीम्मुने ॥१४॥
पारणं च त्रयोदश्यां हन्ति पुण्य पुराकृतम्।
केवला द्वादशी हन्ति पुण्य द्वादशवार्षिकम् ॥१५॥
रविचक्रार्धमाजोऽपि सजोपोष्यं परं दिनम्।
घटिका घटिका वृद्धिर्दशम्येकादशी युता ॥१६॥
एकार्णवेन यत्प्रोक्ता मार्कण्डेयस्य विष्णुना।
वैष्णव च तथादित्ये प्राजापत्य तथैव च ॥१७॥
बार्हस्पत्यञ्च भैत्रञ्च तथैन्द्रो ह्यष्यसंयुता।
दशम्येकादशी शुक्ला तथानक्षत्र सयुता ॥१८॥
ममवह्नम या चैता न वाच्य(?)वस्त चिन्मय।
एक द्वित्रि तत पञ्च षट्ट सप्त तथाष्टभि ॥१९॥
दशम्येकादशी दद्याज्जपादौ परिकीर्तिता।
जया च विजया चैव जयन्ती पापनाशिनी ॥२०॥

उन्मीलिनीवञ्जुलिनी त्रिस्पृशापक्षवर्द्धिनी ।
एकादशी द्वादशी च रात्रि शेषे त्रयोदशी ॥२१॥
त्रि स्पृशानाम सा प्रोक्ता सर्वपापापहारिणी ।
आभाकासितपक्षेषु मैत्रःश्रवणरेवती ॥२२॥
संगमे न हि भोक्तव्यं दशद्वादशी (फलं) हरेत् ।
संयुक्ता द्वादशश्लाति (?) मैत्रः श्रवण रेवती ॥२३॥
आवासेनापि भोक्तव्यं विंशत्रिंशद्घटी त्यजेत् ।
तिथिनक्षत्रसंयोगान्न कुर्यात्पारणं मुने ॥२४॥
तावत्तत्र न भोक्तव्यं यावदक्षान्तिको भवेत् ।
तिथिक्षयेषु योऽश्नाति स भवेद् ग्रामशूकरः ॥२५॥
अपत्यानि विनश्यन्ति जपं वा पारणं स्मृतम् ।
तावत्तत्रन भोक्तव्यं यावन्नक्षत्र संक्षयः ॥२६॥
तिथिक्षयेषुयोभुङ्क्ते स भवेत्किल्विषी सदा ।
अष्टौ तानि व्रतघ्नानि आपोमूलफलं पयः ॥२७॥
हविर्ब्राह्मणकामाय गुरोर्वचनमौषधम् ।
हानि संततिच्छेदं च दौर्भाग्यं च समाप्नुयात् ॥२८॥
महाहानि करा ह्येषा द्वादशीलंघिता नृणाम् ।
न च दण्ड समायुक्ता दशम्येकादशी दिने ॥२९॥
तथावेधं विजानीयान्न कर्त्तव्या कदाचन ।
सुरया विन्दुमात्रेण गांगतोयं यथात्यजेत् ॥३०॥
दशमीवेधसंविद्धा तदा एकादशी त्यजेत् ।
दशमीशेषसंयुक्ता गांधारी साह्य पोषिता ॥३१॥

तथा पुत्रशतं नष्टं मवैया परिवर्जयेत्।
दशमी शेष सयुक्ता केवला द्वादशी तथा ॥३२॥
उपोष्यैकादशी मोहाद् ब्रह्मा फलमश्नुते।
उदये नवमी यत्र परतो दशमी भवेत् ॥३३॥
एकादशी यत्रपूर्णा नोपोष्या द्वादशीफला।
एकादश्याच पश्चाद्धातिर्दादश्याचाद्धीनताच क्रमेण।
मनोपोष्यैकादशी पुनर्वृद्धिनि सन्निश्च जलिपर्व
क्रमेण च॥ इति एकादशी निर्णयः।
जन्माष्टमी तथाशोकी शिवष्टम्या महाष्टमी।
एता मुसमुक्ता काया अष्टम्यन्तुस्य(?)विनाशिनी ॥३४॥
अधिका निशिदोषेण धनपुत्रविनाशिनी।
अष्टमी च तृतीया च षष्ठी चैकादशी तथा ॥३६॥
परविद्धा न कर्तव्या शेषा पूर्वातु वा स्मृता।
चतुर्दशी चतुर्यामेऽमा यत्र न विद्यते ॥३७॥
अमान्ते प्रतिपदा यत्र तत्र भूताचतुर्दशी।
पञ्चमकादशममावास्या पूर्वविद्धातथाष्टमी ॥३८॥
सप्तमाविद्धा च नो(नोपोष्या,पोष्या तिथि पञ्चमी।
गौरा मौरा तथा हवा दुर्गा श्यकामहेश्वरी ॥३९॥
पूर्वविद्धा यत्कृत्वा नराधर्म निकृन्तति।
नागविद्धानुराधा दशम्येकादशी तथा ॥४०॥
भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्।
कृतचैकादशी षष्ठी अष्टमी च चतुर्दशी ॥४१॥

पूर्वविद्धैव कुर्वीत धनापत्यहरा स्मृता ।
सिनीवाली द्विजातीनां येषामग्निपरिग्रहः ॥४२॥
अन्येषामग्निहीनानां कुहूः च परिकीर्त्तितः ।
चतुर्दशी चतुर्यामा अमा यत्र न विद्यते ॥४३॥
आयाति प्रतिपद्यत्रतत्रग्राह्याचतुर्दशी ।
शाकुन्यं पद्मरोमांगी कुलांगीकुलवर्द्धिनी ॥४४॥
पौर्णिमा(पूर्णिमा) पूजयिष्यामि सर्वकामफलप्रदा ।
ऋग्वेदे श्रवणं पूज्यं यजुर्वेदे(तु)पु पौर्णिमा(पू) ॥४५॥
सामगा हस्तनक्षत्रं अथर्वाअपिपौर्णिमा ।
सप्तम्या मुदिते सूर्ये दिनान्ते वाष्टमी भवेत् ॥४६॥
मूलेन षष्ठी संयोगात्पूजनीयाप्रयत्नतः ।
यदाष्टमीमनुप्राप्य चास्तं याति दिवाकरः ॥४७॥
तत्र दुर्गोत्सवं कुर्य्यात्पूजार्थेषु विशेषतः ।
यदाष्टमी न पूज्येत पूज्या तत्र न मिश्रिता ॥४८॥
दुर्भिक्षं भूतपीडा च आयुस्तेषां प्रहीयते ।
दशमीवेधे हतो जीवनन्दावेधहुताशनी ॥४९॥
द्वितीयावेधगोक्रीड़ा सर्वथा परिवर्ज्जयेत् ।
चन्द्रे दृष्टेप्यदृष्टे वा द्वितीया यत्रदृश्यते ॥५०॥
गोक्रीडां न च कुर्वीतेत्यब्रवीत्स्वायंभुवो मनुः ।
गवांक्रीडादिने यत्र सायंदृश्येत चन्द्रमा ॥५१॥
गवां गर्भी(र्भ)विपत्तिःस्यात्पशूनां च क्षयो भवेत् ।
नन्दा भद्रा जया रिक्ता कुहू च प्रतिपद्युते ॥५२॥

गो रत्सव वाप्यमानाम्या दीपं दद्यात्तु पक्षिणी ।
न नन्दायानध्यते रक्षा न पूर्णा वास्तकर्मसु ॥६३॥
भद्राया गवा क्रीडा देशभंगोऽपिजायते ।
चिरं स्वातीगते चन्द्रे वन्हिर्द्धानासमामादिता ॥६४॥
यमदीपत्रयोदश्या दैत्यविध्यं (?) चतुर्दश्याम् ।
नदाया दर्शने रक्षा बलिदान च मृत्यवे ।
गवां क्रीडासुभद्राया वन्हौ वन्हिर्यिवर्जयेत् ॥६५॥

इति श्रीब्रह्मोक्ते याज्ञवल्क्ये तिथिप्रकरणम्नाम नवमोऽध्याय ।

---

## अथ दशमोऽध्यायः

### विनायकादिशान्तिवर्णनम्

शान्त्यर्थैशान्ति कुर्यात्सर्वारिष्टप्रशान्तयेत् ।
विनायक कर्मविघ्नसिद्धयर्थं विनियोजयेत् ॥ १ ॥
गणानामाधिपत्ये च रुद्रेण ब्रह्मणाकृते ।
ते नोपविष्टो यस्तस्य लक्षणानि निबोधत ॥ २ ॥
स्वप्नेऽवगाहयेत्यर्थ जलमुण्डांश्चपश्यति ।
कषायवाससश्चैव क्रव्यादांश्चाधिरोहति ॥ ३ ॥
अन्त्यजैर्गर्दभैरुष्ट्रे महिषैश्च तथैव च ।
सर्वेत्रजानतिष्ठन्ति युध्यात्मानस्तु निर्ज्जित ॥ ४ ॥

व्रजमानंतथात्मानंमन्यते तु गतं परैः ।
विमना विफला रम्या स सीदन्ति निमित्तकाः ॥ ५ ॥
तेनोपतिष्टेल्लभते न राज्यं राज्यनन्दनः ।
कुमारी न च भर्त्तारमपत्यं गर्भमेव च ॥ ६ ॥
आचार्यत्वंश्रोत्रियत्वं न शिष्येऽध्ययनंतथा ।
वणिक्लाभं न चाप्नोति कृषिं चैव कृषीवलाः ॥ ७ ॥
स्नापनं तस्यकर्त्तव्यं पुण्येऽन्हि विधिपूर्वकम् ।
गौरसर्पपकल्केन साज्येनाच्छादितेन तु ॥ ८ ॥
सर्वौपधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ।
भद्रासनोपविष्टस्यस्वस्तिवाच्यंद्विजैः शुभैः ॥ ९ ॥
अश्वस्थानाद्धतस्थानाद्वल्मीकात्संगमान्मृदा ।
मृदंगोरोचनात्गंधान्गुग्गुलं चाप्सुनिक्षिपेत् ॥१०॥
स्नियाहृताश्चैकवर्णा न शिष्यैः सह संयुता ।
नानालङ्कारसंयुक्ता चतुर्भिः कलशैर्ह्रदात् ॥११॥
चर्म्मण्य(नडुहः)स्थाप्यं स्वस्तिभद्रासनन्तथा ।
सहस्राक्षं शतधारं च ऋषिभिः पावनं कृतम् ॥१२॥
तेनमामभिषिञ्चामि पावमान्यः पुनन्तुमाम् ।
भगंते वरुणोराजा भगं सूर्यो बृहस्पतिः ॥१३॥
भगमिन्द्रश्च वायुश्च भगं सप्तर्पयोविदुः ।
यत्तेकेशेपुदौर्भाग्यं सीमन्ते चैव मूर्द्धनि ॥१४॥
ललाटे कर्णयोरक्ष्णोः रापस्तं घ्नन्तुमेसदा ।
स्नातस्य सर्पपं तैलं .स्रुवेणौदुम्बरेण च ॥१५॥

जुहुयान्मूर्द्ध्नि कुशान् सव्ये न परिगृह्य च ।
मितश्च सम्मितश्चैव तथा शालकटंकटौ ॥१६॥
कूष्माण्डं राजपुत्रश्चेत्येतैस्स्वाहा समन्विते ।
दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वत ॥१७॥
कृताकृतांस्तण्डुलांश्च पललौदनमेव च ।
मत्स्यान्पक्वांस्तथैवामां मांसमेतावदेव तु ॥१८॥
पुष्पं चित्रं सुगन्धेनत्रिविधमपिमूलकम् ।
पूरिकापूपांस्तथैवैण्डेरिकास्रज (?) ॥१८॥
दध्यान्नपायसं चैव गुडपिष्टं समोदकं ।
विनायकस्यजननीमुपतिष्ठेत्ततोऽम्बिकाम् ॥१९॥
दूर्वा सर्षपपुष्पाणि दत्त्वार्घ्यं पूर्णमञ्जलिम् ।
रूपं देहि जयं देहि भग भगवति देहि मे ॥२०॥
पुत्रान्देहि धन देहि सर्वकामांश्च देहि मे ।
तत शुक्लाम्बर (धर) शुक्लमाल्यानुलेपन ॥२१॥
ब्राह्मणान्भोजयत्पश्चाद्वस्त्रयुग्मगुरोरपि ।
एवं विनायक पूज्य ग्रहांश्चैव विधानत ॥२२॥
कर्मणाम्फलमाप्नोति श्रिय प्राप्नोत्यनुत्तमाम् ।
आदित्यस्तु सदा पूज्यतिलकं स्वामिनस्य(श्च)स ॥२३॥
महागणपतश्चैव सिद्धिकुर्वन्समाप्नुयात् ।
श्रीकाम शान्तिकामा वा ग्रहयज्ञ समाचरेत् ॥२४॥
वृष्ट्यायु पुत्रकामा वा तथैवाभिचर (न्तु)पुन ।
मण्डल पृथिव्या आह्वान स समुद्रा सपर्वताम् ॥२५॥

मेरुरुत्तरतः स्थाप्य यवैर्वा चन्दनेन वा ।
तण्डुलैर्वापि संस्थाप्य सवीर्या देवतान्यसेत् ॥२६॥
श्रुत्वायोगीश्वरंवाक्यं पृच्छन्तिमुनयस्तदा ।
कियत्प्रमाणं पृथिवी दिशश्चविदिशस्तथा ॥२७॥
कियन्मात्राणि देवानां पूर्वादि दिशिविन्यसेत् ।
कस्य देवस्य किम्बीजं यथावत्कथयस्वमे ॥२८॥
हन्तते कथयिष्यामि प्रमाणं पृथिव्यामुने ।
दिशांचोपदिशां चैव यथा नौरिव संस्थितः ॥२९॥
लक्षंद्वादशकं चैव कोटीनां षड्भिरेव च ।
प्रमाणं पूर्वा विज्ञेयं कथिते तत्त्ववादिभिः ॥३०॥
लक्षं चैकादशं चैव चतुःकोटिस्तथैव च ।
आग्नेयान्तुमितिः प्रोक्ता प्रमाणंश्रूयताम्मुने ॥३१॥
(?) च नैऋत्यां चः प्रकीर्त्तिताः ।
मात्राणिगदितापूर्वं यथोक्तं मुनिसत्तमाः ॥३२॥
लक्षद्वादशसंज्ञञ्च कोटीनां सप्त तथैव च ।
वारुण्यां दिशि विज्ञेयं प्रमाणं गदितम्पुरा ॥३३॥
लक्षश्चैकादशप्रोक्ताश्चतुः कोटिस्तथैव च ।
वायव्यां तु प्रमाणंस्यात्पुरातत्र न संशयः ॥३४॥
अष्टादश च लक्षाणां कोटिश्चैकादशैव तु ।
उदीच्यां तु मितिः प्रोक्ता ब्रह्मणा परमेष्ठिना ॥३५॥
द्विषड् लक्षप्रमाणं च पञ्चकोट्यस्तथैव च ।
ऐशान्यां तु मितिः प्रोक्तागदिता तत्र वै मुने ॥३६॥

लग्न ब्रह्मकूटाद् च क्षितिश्चाकाशमन्तरम् ।
रत्नगर्भमिति प्रोक्ता समुद्रा सप्तपर्वता ॥३७॥
ततोऽवन्हि तु संस्थाप्य होमार्थे हव्यवाहनम् ।
भू शुद्धिं प्रथम कुर्यात्खननापूरणादपि(?) ॥३८॥
कुम्भाम्बुलेपनाच्चैव गोभिराक्रमणात्तथा ।
समूहाभ्युक्षणाप्रोक्ताभूमि शुध्यति सप्तधा ॥३९॥
ततोऽवन्हि तु संस्थाप्य सप्तजिह्वासमन्विताम् ।
धूम्रा च नीलवर्णा च कपिला विस्फुलिङ्गिनी ॥४०॥
ज्वालाख्यार्चिष्मती चैव कव्य या हव्यवाहिनी ।
रौद्रमहारिणी चैव वैश्वानरस्त्वादश ॥४१॥
कव्ययाद्यपूर्वं विन्यस्य हव्यवाह् पश्चिमेन्यसेत् ।
ज्वाला च दक्षिणन्यस्य चार्चिष्मती उत्तरेतथा ॥४२॥
कलो या मूर्ध्निविन्यस्य दशाग्न्यन्तस्तूनम् ।
स्थापयन्हिमयन्तेऽत्रात्स्यान्महागुप्तीस्तथा ॥४३॥
देवतास्तत्र विन्यस्य तथा मत्स्यधिदेवता ।
गणपतिश्चतथाब्रह्माविष्णुशङ्करमेव च ॥४४॥
लक्ष्मी सरस्वती चैव दुर्गति (दुर्गा च) क्षेत्रपालक ।
मातृकगणपतिस्थाप्य ब्रह्माणं स्थापयद्धरिम् ॥४५॥
कत्र्म स्थापयद्विष्णु पश्चमशङ्करन्तथा ।
नाना फलैस्तथाम्बुवाऽन्नपुष्पं सरस्वतीम् ॥४६॥
रक्तपुष्पस्तथादुर्गा क्षेत्रपालस्तथैव च ।
गाणपत्य ब्रह्मयत्र ललाट विष्णुपूर्वकम् ॥४७॥

शम्भचायनमः पूर्वं श्रीश्चते लक्ष्मीस्तथा ।
पञ्चनद्यः सरस्वत्यां देवस्तु तौ दुर्गास्तथा ॥४८॥
न हि स्पृशं तथामन्त्रैर्मन्त्रन्यासाः प्रकीर्त्तिताः ।
सूर्यः सोमोभूमिपुत्रः सोमपुत्रोवृहस्पतिः ॥४९॥
शुक्रः शनैश्चरो राहुः केतुश्चेतिग्रहा.स्मृताः ।
प्रणवंवीजपूर्वञ्च स्थाप्य देवं दिवाकरम् ॥५०॥
कंकुमेन लिखेत्ताम्रे वीजितोऽसौ रविर्भवेत् ।
आकृष्णेनेति मंत्रेण कलाद्वादशभिर्युतम् ॥५१॥
आदित्यं तत्र संस्थाप्य सर्व्वसिद्धिप्रदायकम् ।
सोमं वीजस्थमोंकारं स्थाप्यदेवं निशाकरम् ॥५२॥
चन्दनस्फटिकेलिख्य वीजितोशशिपूजकः ।
इमन्देवेतिमन्त्रेण कलाषोडशभिर्युतम् ॥५३॥
सोमन्तत्रैवविन्यस्य शान्तिकुर्वन्तु नित्यशः ।
ब्रह्म(वीजस्थमोङ्कारं)वीजे स्थाप्यदेवन्तु मङ्गलम् ॥५४॥
तदनेरुणरक्तांगं भौमवीजं लिखेत्सदा ।
अग्निर्मूर्द्धेति मन्त्रेण कलादशसमाद्यतम् ॥५५॥
तत्रैवांगारकं स्थाप्य दशांगं वीजसंयुतम् ।
ॐकारं(वीजपूर्वञ्च)वीजश्चतुर्थस्थाप्यसदावुधः ॥५६॥
हार्दिकं च लिखेत्स्वर्गे वीजितो वुधम्पूजयेत् ।
उद्वुध्यस्वेति च ऋचा कला अष्टसमाकुलम् ॥५७॥
वुधन्तत्र समारोप्य सवीर्यफलदायकः ।
प्रणवौ वायुवीजञ्चन्यसेत्तत्र वृहस्पतिम् ॥५८॥

कल्याणी (?) ग्राम्या वरेण्या कर्पणी तथा ।
सुपुम्ला (म्णा) वृष्टिधान्या जेष्टा चैव हिरण्यदा ॥७०॥
द्वादशैताः कला दिव्या रविमण्डलसंस्थिता ।
पूपायशासुमनसा रतिः प्रीतिकरी तथा ॥७१॥
धृतिवृद्धिकरा ( सा च ) मरीची अंशुमालिनी ।
अङ्गिरा शशिनी चैव तथा सम्पूर्णमण्डला ॥७२॥
तुष्टिश्च परमाख्याता अमृतापोडशीस्मृता ।
कलाचन्द्रस्यविज्ञेयाः शान्ति कुर्वन्तुनित्यशः ॥७३॥
अरुणाचारुणाख्याता लोल लाक्ष्या च रौरवा ।
घोराघोरप्रिया धात्री भीमा चैव कपर्दिनी ॥७४॥
स्थाप्य भौमकला युक्तं दशांगं च कलायुतम् ।
हार्द्रा सौम्या तथा शुभ्रा तारातारसामाथि(समाधि)नी ॥७५॥
गुणागुणवतीचन्द्रा बुधस्याष्टकलाः स्मृता ।
पोतापीतप्रिया हंसा शुवना(शोभना)वनमालिनी ॥७६॥
यया रामेश्वरी तारा सरसाजीव संयुता ।
स्वाहा देवप्रियादेवी तथैन्द्री धरणीस्मृता ॥७७॥
कलाः पञ्चदश प्रोक्ता मण्डलां गिरसंस्थिता ।
शुम्ला सौमनसा चैव पीयूपापयदायिनी ॥७८॥
पद्मापद्मावती गौरी कन्याख्या च सरस्वती ।
चण्डाचण्डी जपी रुद्रा पूर्वप्रीता च भार्गवी ॥७९॥
अर्था च वरुणा प्रीता तथान्या कनकास्मृता ।
अष्टादशकलाः प्रोक्ता भृगुमण्डलसंस्थिता ॥८०॥

कृष्णावश्रथयरपिरा मीमामीमभयानका ।
कपालमालिनी प्रोक्ता दुर्गनामारनी(णी)तथा ॥८०॥
शनैश्चरकला दिव्या कलाष्टशनिसयुता ।
नीलानील प्रिया कुम्भा कृष्णावदनवर्द्धिनी ॥८१॥
अथराणा(ला)दिनी क्लीवा राहुकेतु कला स्मृता ।
गौरी सरस्वती लक्ष्मी तथैन्द्री च चतुर्थिका ॥८२॥
अन्ये ये मण्डले देवा कलाश्चपरिविन्यसेत् ।
ईश्वरी गिरिजानन्द कृष्णब्रह्मेन्द्रमन्त्रकृत् ॥८३॥
कालश्च(श्च)चित्रगुप्तश्च(श्च)स्थापयेद्महदेवताम् ।
दधिदुग्धशिवस्थाप्य मृत्तिकास्थाप्यपावनी ॥८४॥
स्कन्दश्चदुग्धविन्यस्य हविः स्थाप्यचतुर्मुखम् ।
इन्द्रश्च गोमयन पिण्डन अन्तक स्थापयेत्तिलै ॥८५॥
कालश्च आयस स्थाप्य चित्रगुप्त तिलैर्यवै ।
महदेवाश्च विन्यस्य ब्रह्मार्जे न वीचित ॥८६॥
मध्ये ब्रह्मसमाराप्य मन्त्रन्यासमन्तत परम् ।
त्र्यम्बकयनामह श्रीश्वते लक्ष्मीस्तथा ॥८७॥
यन्त्रन्दत्रिप्पारशन्मात्रक्षमक्षमेन च ।
भजापा च यमायन्वा कार्यो धानवत्त(?) ॥८८॥
मण्डलन तु मन्त्राय मन्त्रन्यासा प्रकीर्त्तिता ।
काञ्चन वर्णा विन्यस्य आयोराजतथैव च ॥८९॥
मृत्तिका प्रथिरान्यस्य कंकुम हरणिमेकेरच्च(कराव)म् ।
स्कन्दश्चगोमय पिण्ड पुन्नामामपिगोमयाम् ॥९०॥

प्रजापतिं च वै स्थाप्य सर्वं च तिलतण्डुलैः ।
पिण्डं संस्थापयेत्तत्र पुनर्ब्राह्मणवीजिताः ॥६१॥
सर्वं ग्रहमारोप्य नवीनां बीजसंयुता ।
सनः पितरपयो अद्यां मारीयोः पृथिवीस्तथा ॥६२॥
रुद्रं विष्णुर्मता इन्द्र इन्द्रदेवीस्तथैव च ।
प्रजापते नमोनर्थ्यं प्रत्ययज्ञानमेव च ॥६३॥
मंत्रसंस्कार विज्ञेया सर्वोजात्रकासंयुता ।
गणपतिं तथा चण्डीं वायुमन्तरिक्षदिग्गजान् ॥६४॥
देवताः पञ्चविन्यस्य ॐकारेणैव वीजिताः ।
गणानांत्वा जातवेदा प्रयो(प्रजापते)पेतथैव च ॥६५॥
घृतं घृतपावानश्च प्रजापतये च वायवे ।
मंत्रसंस्कार विज्ञेया मण्डले पूजयेत्तदा ॥६६॥
मध्ये तु भास्करं स्थाप्य आग्नेय्यां च निशाकरम् ।
भौमन्तुदक्षिणंन्यस्य ईशाने तु बुधंन्यसेत् ॥६७॥
पश्चिमे तु शनिस्थाप्यवायव्यां राहुमेव च ।
केतुंस्थाप्य तु नैऋत्यां एवं स्थाप्यनवग्रहान् ॥६८॥
ततस्तु देवताःस्थाप्य अधिदेवांस्ततः परम् ।
पञ्चदेवांस्तु विन्यस्य ततः प्रत्यधिदेवताः ॥६९॥
इन्द्रोऽग्नियमानैऋत्यां जलं वायुं कुबेरकम् ।
ईशानेकेशवेन्द्राणी स्थापयेत्पञ्चपल्लवैः ॥१००॥
गोमयेनस्थापयेदिन्द्रमग्निस्थाप्यघृतेन च ।
माक्षिकेन यमंस्थाप्य दध्नास्थाप्य तु नैऋते ॥१०१॥

मृत्तिकयास्थाप्यकलशं धान्यं स्थाप्य तु निक्षिपेत्(विन्यसेत्)।
क्षारेणस्थापयेत्सोम कृष्ण चन्दनगाञ्जनम् ॥१०२॥
ईशान धान्यमध्ये तु एव संस्थाप्य सत्तमा ।
प्रातारमग्नि दूतश्च यमायत्वय नैर्ऋते ॥१०३॥
इमम्मे वरुण चैव या (?) यदावित।
ईशानोपनमद्धं प्रतद्विष्णुस्तथैव च ॥१०४॥
मन्त्र साक्षारेण(षँ) प्रोक्ता ये च प्रत्यधिदेवता ।
य पार्श्ववर्त्तिनोदेवा ये वै स्थापनमुत्तमा ॥१०५॥
मध्य स्थाप्य चतुर्वेदान्तद्वच्चैव तु राशय ।
तद्बाह्ये स्थापयेद्योगा ऋक्षा स्थाप्यास्तत परम् ॥१०६॥
गायत्रीमैषपर्णां च योगे योगेतरस्ततम् ।
अश्विनातेनयश्चैव मन्त्रन्यासेन पूजयेत् ॥१०७॥
इन्द्र शानयामध्य लोकपालान्प्रपूजयेत् ।
वायव्यस्तामयामध्येनरसवानगी निवासयेत ॥१०८॥
ध्र वोध्रुवश्च सोमश्च आपश्चैवानिलोऽनल ।
प्रत्यूषश्च प्रभासश्च वसवाऽष्टौ प्रकीर्त्तिता ॥१०९॥
शतधारणविन्यस्य मन्त्रवत्पूजयेत्तत ।
इशानान्तरमध्य तु ऋषीन्सप्तप्रविन्यसेत् ॥११०॥
गौतमाऽत्रभरद्वाजौ विश्वामित्रोऽथकश्यप ।
जमदग्निर्वशिष्ठश्च अत्रिश्चैव तत परम् ॥१११॥
सप्तऋषींश्च विन्यस्य सर्वांयान्पूजयेत्सदा ।
इशानइन्द्रयाम्मध्य रुद्रानेकादश न्यसेत् ॥११२॥

अजैकपादहिर्बुध्न्य विरुपाश्च तथैव हि ।
हरश्चबहुरूपश्चत्र्यम्बकश्चसुरेश्वरः ॥११३॥
सविता च जयन्तश्चपिनाकी नीललोहितः ।
रुद्राएकादशप्रोक्ता एतान्संन्यसेत्सदा ॥११४॥
रुद्राग्नेययोर्मध्ये द्वादशादित्यान्न्यसेत्सदा ।
इन्द्रोधाता भगः पूषा सविता विष्णुरेव च ॥११६॥
त्वष्टा मित्रोयमश्चैव आदित्याद्वादशस्मृताः ।
सवितारं प्रथमे न्यस्य मन्त्रन्यासं यथोचितम् ॥१२०॥
दक्षिणाग्नेययोर्मध्ये विश्वेदेवाष्टमातरः ।
कामः कालो धृतिश्चैव पूर्वमेवप्रकीर्त्तिताः ॥१२१॥
अदितिर्द्यौरितिसंकृत्य पूज्या पार्श्ववर्त्तिनः ।
ब्राह्मीमाहेश्वरी चैव कौमारी वैष्णवी तथा ॥१२२॥
वाराही च महेन्द्राणी चामुण्डा च तथाश्रिया ।
क्षेत्रपालसहा पूज्यास्तथा गेशानसंयुता ॥१२३॥
ब्रह्माणी मे शर्म्मा(सरमा)श्चैव(?)नृत्या एण्यन्द्रमेव च ।
खड्गो इन्द्रपत्नी च जातवेदा लक्ष्मी तथा ॥१२४॥
न हि स्पृशसमुच्चार्य मन्त्रसंस्कार उच्यते ।
याम्य नैर्ऋतयोर्मध्ये स्थापयेत्पितृगणैः सह ॥१२५॥
कव्यवाडनलंसोमं यममर्यमणं तथा ।
अग्निश्वात्तावर्हिषदो ऊष्मामरीच्य(च्यादय): ॥१२६॥
मधुपाः सोमपाश्चैव नमोवश्च पितॄन्यसेत् ।
वरुण नैर्ऋतयोर्मध्येस्थापयेत्सप्तसागरान् ॥१२७॥

लवणेक्षुसुरासर्पिर्दधिदुग्धसमजले ।
शुद्ध सागर सङ्कृत्य अद्भ्य सूक्तेन विन्यसेत् ॥१२८॥
वरुणवायव्ययोर्मध्ये नागानष्टकुलान्यसेत् ।
अनन्तं वासुकितक्षक कर्कोटकधनञ्जयौ ॥१२६॥
पद्म चैव महापद्मं शङ्ख च कुलिक तथा ।
सर्पसूक्तेन विन्यस्य पूजयेच्च सरीसृपान् ॥१३०॥
वारिराज विशामध्ये पञ्चभूतात्मवैन्यसेत् ।
पृथिव्यापश्चतेजश्च वायुराकाशमेव च ॥१३१॥
पूर्वभागे वडवस्तूत्‌ वसन्त्वादीन्प्रपूजयेत् ।
दक्षिण च पितॄन्देवान्धुवरचान्तरे पूजयेत् ॥१३२॥
अगस्त्यो दक्षिण पूज्य पृथग्मन्त्रैश्चमन्त्रवत् ।
भूतायत्या वसन्ताय नमोय पितरस्तथा ॥१३३॥
ध्रुव क्षिति रतन(ना)मान मन्त्रन्यास्त्र प्रकीर्तिता ।
आपो देवीति मन्त्रेण सर्वदेवा समागता ॥१३४॥
आगतान सर्वदक्षाश्च पूर्वादिदिशि विन्यसेत् ।
चतु कोटिस्तु पूर्वेण द्विकोटि वन्हौ विन्यसेत ॥१३५॥
चतु कोटिस्तुयाम्या च चतुकोटि स्तु नैरृते ।
स्थिता कोटिस्तु रम्या सप्तद्वायव्यमेव च ॥१३६॥
उत्तरेण चतुकोटि रीशान त्रितय स्मृतम् ।
ऊर्ध्वं चव त्रिकोटिस्यात्त्रिकोटि च अधोन्यसेत् ॥१३७॥
मर मण्डलमध्यस्थात्रिशद्दं परिपूरयेन ।
पूज्या च तानमयुक्ता सर्वकामफलप्रदा ॥१३८॥

होमे च शान्तिके चैव वैष्णवे शुभकर्मणि ।
वैकुण्ठे पौष्टिकेयज्ञेवरुणं पत्र(त)पूजयेन् ॥१३६॥
सवीर्याः सफलाः पूज्यानिर्वीयाः निःष्फलाः सदा ।
वीजहीनेन यद् वं(?) मंकुर्यात्कर्मसिद्ध्यति ॥१४०॥
अर्केण (?) पुष्पाञ्जलिः पुष्पं नैवद्य पायसन्तथा ।
आदित्यस्तु यदापूज्याः वास्तुपूजयेत्सदाशुभम् ॥१४१॥
विल्वपत्रं तथा पत्री(त्रं)जातीपुष्पंतथैव च ।
नैवेद्य गोपयश्चैव वास्तुश्चन्द्रम्प्रपूजयेत् ॥१४२॥
ब्रह्मपुष्पं तु पुष्पंस्याद्यवागृन्नानिवेदयेत् ।
पूजयेद्धरणीपुत्रं वासुस्थः स्वस्थोभवेत्सदा ॥१४३॥
पीतपुष्पं तथा पत्री(त्रं)तुलस्या वा तथैव च ।
गोधूमान्नं च नैवेद्य वुधपूजाविध्युच्यते ॥१४४॥
मृ(भृं)गराजं पीतपुष्पं नैवेद्यञ्चयप्रो(वो)दनम् ।
वाक्पतिं पूजयेद्वास्थः शान्तिकुर्यात्सनित्यशः॥१४५॥
जातीफलं तथामल्लीयवान्नंदुग्धसंयुतम् ।
भार्गवं पूजयेन्नित्यं सर्वसिद्धिप्रदायकम् ॥१४६॥
तिलौदनं च नैवेद्य राजसेनां च पत्रिका ।
वास्तुपूज्येव्वनिन्देवं(?)फलं स्वस्थं प्रदापयेत् ॥१४७॥
भू कदम्वं च कल्हारी परीदद्यात्तुतौग्रहौ ।
मापोदनेन(दनं)च नैवेद्येन(वेद्य) राहुकेतुम्प्रपूजयेत् ॥१४८॥

नैवेद्यं सघृतं कुर्याद्ग्रहाणां च विशेषतः ।
अन्येषां सर्वदेवानां नैवेद्यं पायसं स्मृतम् ॥१४९॥

पूजयेन्नंत्रसंयुक्तं धूपदीपैश्च गुग्गुलैः ।
यवैश्चैव तथा कुर्यात्स्थापनं सर्व देवता( नाम् ) ॥१५०॥

अर्क पलाशखदिरापामार्गोऽथ पिप्पलः ।
औदुम्बर शमीदूर्वा कुशाश्चसमिधः क्रमात् ॥१५१॥

अष्टाभिश्चाष्टशतं अष्टाविंशतिमेव च ।
होतव्यामधुसर्पिभ्यां दध्ना क्षीरघृतप्लुताः ॥१५२॥

गुडौदनं पायसं च हविष्यक्षीरमिष्टकम् ।
दध्योदनं हविश्चूर्णं मांस(माषं)चित्राण्यनेकधा ॥१५३॥

दद्याद्ग्रहाः क्रमादेवं द्विजेभ्यो भोजनं तथा ।
होतव्या सूर्यसंयुक्ता रात्रौ नैव च नैव च ॥१५४॥

स्वाध्याय भोजनं होमं महादानागमम्त्वयम् ।
एतद्रात्रौ न कुर्व्वीत प्रवीत्स्वायंभुवः पुरा ॥१५५॥

कृत्( ग्र )सग (ग्रह)तथारात्रौ चाण्डालम्लेच्छदर्शने ।
होमं दानं तथा श्राद्धं नैमित्तं सत्रवर्ज्जयेत् ॥१५६॥

उपरागे गुरुर्दीक्षे पुनः जाते तु सङ्क्रमे ।
स्नानं दानं तथा होमं रात्रौ कुर्याच्चबुद्धिमान् ॥१५७॥

धनु शङ्खस्तथाऽनड्वान्हेमवासो हय क्रमात् ।
कृष्णागौरायसञ्छागा एतावै दक्षिणा स्मृता ॥१५८॥

तत्पात्रस्य तु संस्थित्यं गुणं भेदानुवर्तते ।
श्रद्धया सुरलिता मातं कृत्वा हरिजनार्दनं ॥६॥
कालयातं वमङ्गावं गुनं सात्विक उच्यते ।
हरिकृत्वादिचातुद्दिनीयते स्यानिर्हितं ॥७॥
यदाभिमाय मार्य(स)श्र दान महाजसंमृते ।
शुद्धम्यल्लितचित्तपु दीयते यन्ममन्नत ॥८॥
न ज्ञय तामम म्बल यदाम्नापयते बहु ।
गामेकम्यापि मन्वन महम्यं राजमेन तु ॥९॥
दीयते नममाल्क्ष्य ममंदानं तदुच्यते ।
विमाने परमाम्दो दिन्यभोगनिभूपित. ॥१०॥
नागतनिष्टस्थने स्यगामगोमानं प्रयच्छति ।
सुगीला लक्षणवती यवतीनत्म संयुता ॥११॥
नदुग्धदा स्निग्राष धनुदयाद्विचक्षण ।
विनल्मा रोगिणा दुष्टाश्वनिराम्रकभीरणी ॥१२॥
भ्राणा श्रात्मगोत्रगात्स्याम्यमवान्नुयात् ।
गौन हम ममानुक्रमश्र पात्र निधानत ॥१३॥
कान्तदाहन मनुता श्रष्टानस्यपुगानुना ।
पञ्चमापाचला मना घण्टाभरणभूषिना ॥१४॥
त्रिपल हमसनक्ता शिरश्रङ्गे अलंकृत ।
रौप्यचाष्टपल ग्रान्त मराणामप्यलङ्कृता ॥१५॥
तथा नाम्रपष्टिपल प्रात्त पृष्ठदेश निधापयेन् ।
कान्तदाहन मनुक्ता पलाना सप्त सप्तति ॥१६॥

दीयते पुच्छ संगृह्यसत्पात्रे दक्षिणान्वितं।
दद्यान्मन्त्रं समुच्चार्य चतुर्वर्गफलप्रदा ॥१७॥
सौवर्ण रौप्यमहिषी वृषमं च यथाविधिः।
पृथग्मंत्रं समुच्चार्य तथान्ये परमात्मने ॥१८॥
तरुणारूप संपन्ना सुशीला च पयस्विनी।
न्यायार्जिता सवत्सा च सादेया ब्राह्मणाय गौः ॥१६॥
आदित्यदुहिताधेनुः सर्व्वदानोरुमोत्तमः।
अनेनगौः प्रदानेन गोविन्दः प्रीयताम्मम ॥२०॥
गावो मे अग्रतः स्थातु गावोमे संतुपृष्ठतः।
गावो मे गात्रतः संतु गवाम्मध्येवसाम्यहं ॥२१॥

इति धेनु गोदान संकल्पः

दत्वैवं दिव्यभोगानि दिव्यस्त्रीवृंद संवृतः।
गोवत्स रोमतुल्यानि वर्षाणि दिवि मोदते ॥२२॥
यावद्वत्समुखं योनौ दृश्यते गोमुखामुखी।
यावन्त जायते धेनुस्तावद्भूसकलामता ॥२३॥
अलंकृत्योक्तविधिना सुवर्ण त्रिपलान्विता।
दत्वातु पुरुषः स्वर्गे वसत्यमरपूजितः ॥२४॥
गोदानविधि संयुक्तं प्रदद्यान्महिषी शुभा।
विश्वामित्र कुलोद्भूता सौरभी पयसंयुता ॥२५॥
दुस्तरातरणे दाने सूर्य्यजः प्रीयतां मम।
नदी वैतरणीनाम यममार्गे भयावहा।
तस्याहं तरणार्थाय महिषीञ्च ददाम्यहं ॥२६॥

इति महिषीदान सङ्कल्पः

यम द्वारे पथश्चत्र कृष्णावैतरणी नदी।
तत्तुं काम प्रयच्छामि कृष्णवैतरणीं च गाम् ॥२८॥
ऋणं च सर्वदा नित्य यत्कृणं च मया कृतम्।
ऋणधनु प्रयच्छामि(प्रदास्यामि) प्रीयतामे जनार्दन ॥२८॥
यत्सेवा चापि सङ्कल्प वसनो भविता मम।
तस्य सङ्कल्प सिद्धयर्थं गवां दत्वा द्विजोत्तम ॥२९॥
वृष युग्म वृष वापि दत्वा गत्वश्वरालयम्।
भुक्त्वा भोगानन्वनेकानिविगुणो युगसदानत ॥३०॥
धराधनु समोऽनङ्वानक्चैव धुरन्धर।
धर्मात्व वृषरूपेण जगदानन्दकारक ॥३१॥
तस्माद्, प प्रयच्छामि धर्म्मे प्रीणातु नित्यरा।

इति वृषभ सङ्कल्पः

अप्राच्छ पुनर्लोक भूमिदान द्विजातिभि।
ग्वा तु पुण्य स्वर्गे पूज्यते त्रिदशात्तमै ॥३३॥
वाञ्छन्तिपितरो नित्य स्वर्गे वसति नित्यश।
यथास्मत्कुलन कश्चिद्बत्यवनिदानकृत् ॥३४॥
नरस्थामउ(मु)लोका स्वर्गस्या परम पदम्।
धरणीसत्वजीवानां सर्वदानोत्तमोत्तमा ॥३५॥
रत्नगर्भाधरा प्रोक्ता काश्यपी शस्यमालिनी।
अनेन भूमिदानेन रास्येन परिसयुता।
प्रीयताम्मे सदा नित्य रुद्रविष्णुप्रजापति ॥३६॥

इति भूमिदान सङ्कल्पः

षष्टिप्रस्थ तिलानां च स्वर्णं पल चतुष्टयम् ।
रूप्यं(रौप्यं) चाष्टपलं प्रोक्तं ताम्रं षष्टिशतंफलम् ॥३७॥
तिलं द्विगुणकं प्रोक्तं तिलपात्रं विधीयते ।
देवाशनं तिलाः प्रोक्ताः पितृणां सर्वकर्मसु ।
स्वर्णरौप्यतिला(न्)दत्त्वा सर्वदेवाः प्रसीदन्तु ॥३८॥

इति तिलपात्र सङ्कल्पः

अन्नात्प्राणाः समुत्पन्नास्तस्मादन्नम्प्रदापयेत् ।
अन्ने दत्ते मनुष्यस्य प्राणदाताभवत्यलम् ॥३९॥
अन्नदः सुखमाप्नोति तथापो(चो)त्पन्नदः(?) ।
इदमन्नं मया दत्तं प्रीयतां पितृदेवताः ॥४०॥

इति अन्नदान सङ्कल्पः

स्वर्णरौप्यं च गौभूमिरन्नंवस्त्रंतथातिलाः ।
दत्तैस्तैर्विष्णुसदनं यातिभूत्वा च विष्णुवत् ॥४१॥
अन्नदस्तु सुखंयाति लोकत्रयसुदुर्लभम् ।
कल्पायुश्च भवेद्भोगी वसते ब्रह्ममण्डले ॥४२॥
धातूनामुत्तमं यस्माद्धाटकं सुखल्लभम् ।
तस्माद्धेमं प्रदास्यामि हेमगर्भः प्रसीदतु ॥४३॥

इति स्वर्णदान सङ्कल्पः

शिवनेत्रसमुत्पन्न रौप्यं पितृगणप्रियम् ।
तस्माद्रौप्यप्रदानेन प्रीयतां रुक्मिणीपतिः ॥४४॥

## इति रौप्यदान सङ्कल्पः

गोपुच्छेषुशिरादासी अश्व कर्णेकरे करि ।
महिपीशृंगे वृपस्कन्धे गृहस्तम्भे परेभुवि ॥४७॥
हलाग्रकोटी रथचक्रमध्ये पत्नीहृद्देनाभि अयाविकाश्च ।
उष्णश्च ग्रीवारार पादयोश्च शोपानिशानानि च विप्रहस्ते ॥
आस्फोटयन्ति पितरोनन्दयन्ति पितामहा ।
भूमि दानात् कुले जाता(तो)म(स)नस्त्राता भविष्यति ॥४६॥
वसन्तिश्च लोकेषु शीतामलजलप्रदा ।
जलधेनुश्च यो दद्याद्विप्रभ्यस्तु कमण्डलुम् ॥५०॥
दिव्य वर्ष सहस्राणि सुरसुन्दरिसम्वृत ।
ब्रह्मलोकमवाप्नोति पितृगोत्रसमन्वित ॥५१॥
ग्रीष्मप्रवेशेमणिकद्दाति द्विजवेश्मनि ।
मडूपफलमाप्नोति स्वर्गलोके महीयते ॥५२॥
अम्बु पूर्णघट यस्तु दद्याद् ब्राह्मण वेश्मनि ।
स सौभाग्यमवाप्नोति तडागसुकृतफलम् ॥५३॥
स तोया पथिके विप्र यो दद्यात्करपत्रि(त्रि)काम् ।
फल मडूपा चान्तस्य नूनमाप्नोति मानव ॥५४॥
ॐ रग(?)माग सपूर्ण यो ददाति द्विजालये ।
स गत्वा कालसभुक्त भोगाभोगमनेकधा ॥५५॥
पत्रैतुकफल पञ्चधान्यान्या (?) पूर्णदो ब्रह्ममन्दिरम् ।
विश्वतम वृतमुडक प्रसीदन्तु सुवर्णकम् ॥५६॥

मृण्मयं गृहसम्पूर्णं स्तम्भ तोरण संयुतम्।
उत्तमांग समायुक्तं तथादालकराजितम् ॥५७॥
सर्वधान्य समायुक्तं पुष्पवस्त्रसमावृतम्।
सुवर्ण राजतं ताम्रं कांस्य द्रव्यसमन्वितम् ॥५८॥
लघुं गुरुं वा यो दद्याद् ब्राह्मणेषु प्रयत्नतः।
ब्रह्मलोकमवाप्नोति दिव्यस्त्री चारुसेवितः ॥५९॥
त्रिंशद्युगसहस्राणि भुक्त्वां भोगान्यनेकशः।
स प्राप्नोति शुभं गेहं धनधान्यसमाकुलम् ॥६०॥
पुत्र पौत्र समायुक्तं दिव्यस्त्री चारु शोभितम्।
छत्रादि छायया चैव उपानहौददाति यः ॥६१॥
दीपज्योतिरिवान्तश्च भवेन्माज्र्जनकृन्नरः।
चन्दनं तालवृन्तं च फलानि कुसुमानि च ॥६२॥
ताम्बूलमासनं शय्यां दत्वाऽत्यन्तं सुखी भवेत्।
प्रिया (यं) वा निर्म्मलं चेतोऽभिमानावमानितम् ॥६३॥
आर्त्त प्राणाकृतं यज्ञः कलां नार्हन्ति षोडशीम्।
समुद्धरन्तिये विप्रं सीदन्तं मत्परायणम् ॥६४॥
स तरिष्यत्यचिरादापद्भ्यो नौरिवार्णवम्।
पूर्वोक्तविधिदानेभ्यो विद्या दानं विशिष्यते ॥६५॥
महादानं विदानं यद्विद्यादानं परस्परम्।
नरकादुद्धरते विद्या तथा मोक्षप्रदायिका ॥६६॥
स्वर्गं मोक्षञ्च कीर्त्तिञ्च विद्यायालभतेनरः।
कर्म्मणा मनसा वाचा सर्वेषांहितमाचरेत्. ॥६७॥

यादृक्तादृगवस्थासु ब्राह्मणं न प्रकोपयेत्।
यथा कुम्भो नदीतीरे यथाऽग्निः तृणाश्रये ॥९८॥
सन्तुष्टस्तारयेद् दुर्गं दुष्टो हन्ति च तत्कुलम्।
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ॥९९॥
शूलपाणिश्च भगवानभिनन्दन्ति भूमिदम्।

इति श्रीब्रह्मप्रणीते याज्ञवल्क्ये धर्मशास्त्रे दानप्रकरणम् नाम एकादशोऽध्यायः।

---

## अथ द्वादशोऽध्यायः

दत्त्वा द्रव्यञ्च यः सम्यक्पुनरादातुमिच्छति।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम् ॥१॥
अदेयमथ देयं च दत्तं चादत्तमेव च।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥२॥
तत्राष्टावप्रदेयानि देयमेकविधं स्मृतम्।
दत्तं सप्तविधं विद्यादत्तं षोडशात्मकम् ॥३॥
अन्वाहितं याचितकमाधिः साधारणं च यत्।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥४॥

आपत्स्वपिहि कष्टासु वर्त्तमानेनि देहिना ।
अदेयान्याहुराचार्या यथान्येभ्यः प्रतिश्रुतम् ॥५॥
आपत्स्वपिहियद्दत्तं यद्दत्तमधिनाश्रिकम् ।
अथः प्रतिमहेकीते पूर्व्वं च वल्वत्क्रिया ॥६॥
अन्येषु च विवादेषु उत्तरा वलवत्क्रिया ।
आपद्गतेषु दानेषु नदानं प्राक(श्रेष्ठ) मर्हति ॥७॥
न तत्पूर्वमवाप्नोति मनुः स्वायम्भुवोऽब्रवीत् ।
गोत्र साधारणी वृत्तिर्नदाने न च विक्रये ॥८॥
आपत्स्वपि हि देया सा तत्र गोत्रमकारणम् ।
समानो गोत्रयोर्यो सपिण्डो वापि गोत्रजः ॥९॥
सूते (तर्क) तेन स्पर्शः(?) गोत्रिणस्तु न उच्यते ।
आपत्स्वपि हि यद्दत्तं वन्यावावृत्तिमेवच ॥१०॥
द्रुहिणेन तदा प्रोक्तं नैव तैः प्राप्यते धनं ।
गये गांगेऽपि यद्दत्तं यद्दत्तं राहुदर्शने ॥११॥
दानमन्यच्च यद्दत्तं देवब्राह्मण सन्निधौ ।
पुनर्न समवाप्नोति आयुः स्वायंभुवः पुरा ॥१२॥
गये गांगेऽपि यद्दत्तं पितृनुद्दिश्य(द्वृत्य)मक्षयम् (चत्कृतम्)।
आपत्स्वपि हि यद्दत्तमुद्धरेत्स स्वमन्वयम् ॥१३॥
आत्मदत्तेषु दानेषु योऽन्यस्मै दातुमिच्छति ।
यो ददाति दापयति व्रजेतां निरयन्तु तौ ॥१४॥
भुज्यमानं यदा छत्रं न पुनर्भुज्यते यथा ।
जलपूर्णं तथा दानं न पुनर्लब्धुमर्हति ॥१५॥

अप्रदत्तारमाचार्यमनधीयान मृत्विनम् ।
गृह काम तु गोपाल वनकामन्तु नापितम् ॥१६॥
षडेते पुरुषो नह्याद्भिन्नानावमिवाम्भसि ।
उल्काहस्तोऽग्निदोऽग्ने य शस्त्रपाणिस्तु घातक ॥१७॥
अचौरैश्चौरतां याति माण्डव्यव्यवहारत ।
उत्क्रम्य वृत्ति य स्यास(?)यस्य घातोगवादिभि ॥१८॥
गोपालस्तुवद(?) मोवैसेवेधन्दिनम्थारयेत् ।
समूले शस्यनाशे तु भक्षन्नीति समाप्नुयात् ॥१६॥
गोपालस्तत्रचै दम्यो अन्य स्वामीयथाविधि ।
गौ प्रसूतादशाहात्तु समानक्षपिकुञ्जर ॥२०॥
निवार्य तु प्रयत्नेन तेषां स्वामी न दण्डभाक् ।
अदम्याहस्तिनो अश्वा प्राना (?) हितेस्मृता ॥२१॥
अदम्या गर्भिणी गौश्च सूतिकाचातिभारणी ।
प्रोक्तस्तु द्विगुण दम्य (?) श्चतुर्गुणम् ॥२२॥
प्रत्यक्षवारकयाणातु दम्यश्चौर(?)प्रकार ।
या नग पल दोपण (?) क्षेत्रमन्यसमाश्रिता ॥२३॥
न तत्र गोपिनोदण्ड्या पाल्कोदण्डमर्हति ।
राजग्रहगृहीतोरा वज्राशनिमृतोऽपिवा ॥२४॥
अथ सर्पेण वा दष्टो गर्त्तेपक निपातिता ।
नात्र पालकदोष स्यान्नैव दोषोऽस्ति गोपके ॥२५॥
सुधानवगृहस्थस्य इन्यानियमेन तु ।
नव कर्माणि तस्यैव विकर्माणि नवैव तु ॥२६॥

प्रत्ययामि(?)नवान्यानि प्रकाशानि नवस्तथा ।
नवलानि नवान्यानि फल्यानि च पुनर्नवा ॥२७॥
अदेयानि नवान्यानि वस्त्रजातानि सर्वदा ।
नवकानयनिर्दिष्टा मनुष्यो अननिकारकाः ॥२८॥
सुधावस्तूनि वक्ष्यानि विशिष्टे गृहमागते ।
मनश्चक्षुर्मुखं वाचं सौम्यं दद्यादनुष्ठयम् ॥२९॥
अभ्युत्थानानि वक्ष्यामि विशिष्टे गृहमागते ।
न सिद्धागंथ पूर्वालापः (?) प्रियान्वितः ॥३०॥
उपासनमनुव्रज्यात्कार्यान्नव सुधास्मृताः ।
इष्टानां कथयिष्यामि भूमिरापस्तृणानि च ॥३१॥
पादशौचं तथाभ्यं (गं) वाश्रमं शयनं(भाषणं) तथा ।
किञ्चिदन्नं यथाशक्ति इष्टान्येतानि कीर्तिता (नि) ॥३२॥
सन्ध्या स्नानं जपोहोमः स्वाध्यायो देवतार्चनम् ।
वैश्वदेवेक्षणातिथ्यमुद्धृतं चापि शक्तितः ॥३३॥
पितृदेवमनुष्याणां दीनानां च तपस्विनः ।
मातृपितृगुरूणांच संविभागोऽथ कस्यचित् ॥३४॥
एतानि नवकर्माणि विकर्माणि नियोधतत् ।
अनृतं परदारत्वं (च) असत्यस्य च भाषणम् ॥३५॥
अगम्यागमनं स्तेयं पेयापेयंच हि व्यसनम् ।
अश्रौत्रकर्माचरणं मैत्रधर्मबहिष्कृतम ॥३६॥
नवैतानि विकर्माणि तानि सर्वाणि वर्ज्जयेत् ।
आयुर्वित्तंगृहच्छिद्रं मंत्रमैथुनमौषधम् ॥३७॥

तपो दा(मा)नापमानञ्च नव गोप्यानि सर्वदा ।
प्रायोऽप्यमृणशुद्धिः स्याद्दानधर्मं विशुद्ध्यति ॥३८॥
पात्रे धनं वार्धुषिं दत्वा शुद्धिमवाप्नुयात् ।
आदातुरचैन्द्र शुद्धार्थमिष्टं वरिचनरी(?)स्मृत ॥३९॥
लोमभ्य स्वाहेत्यथैहि लोमभ्यश्च तदैतनु ।
मन्त्रान्त जुहुयाद्वापि मन्त्रवीर्य यथाक्रमम् ॥३९॥
समाप्ते या हुतोलभ भूय शुद्धिमवाप्नुयात् ।
अरण्ये प्रान्तरे अप्या त्रि कृत्वो वेदसंहिताम् ॥४०॥
शुद्ध्यते चान्यता शीर्ष्यात्रतिस्रोतपीतां (?) सरस्वती ।
वाल(वाल)वासा जटीवाप्याद्ब्रह्महत्याव्रतं चरेत् ॥४१॥
पिण्याकया कणान्नं वा भक्षयेन्न समाहित ।
गायत्र्याश्च जपेत्कोटिं ब्रह्महत्यां व्यपोहति ॥४२॥
गायत्रीलक्षपञ्च्या च मुच्यते गुरुतल्पग ।
ब्रह्महा ब्राह्मणत्राणाद्गां दद्यात्तथा सुताम् ॥४३॥
च पाप (?) तु दशाब्द कर्म कीर्तयेत् ।
अग्निदो गरदश्चैव शस्त्रपाणिर्धनापह ॥४४॥
क्षत्रदारापहारी च षडेतेह्याततायिन ।
शस्त्रपाणि समायान्तं यदि विप्र षडङ्गवित् ॥४५॥
निघ्नन्त निघ्नमीयान्न तेन ब्रह्महा भवेत् ।
अताहितमनक्लेशा न वियोगो धनस्य च ॥४६॥
म्रियते च परार्थेषु न दोष परिकिर्त्यते ।
वृषभैक सहस्र गा दशलक्षण(विप्र)वधे पुमान् ॥४७॥

ब्रह्महत्याव्रतंचापि वत्सरत्रितयं चरेत् ।
वैश्यहाब्दं चरेदेतद्द्यादेकशतंगवाम् ॥४८॥
शूद्रहन्ता च षण्मासं व्रतं चरेद्दारुणम् ।
गवां च दशकं दद्याच्छूद्रहन्ताविशेषतः ॥४९॥
अप्रदुष्टां प्रियां हत्वाशूद्रहत्याव्रतं चरेत् ।
प्रमादेन हतं (तो) येन वालको मुनिसत्तमः ॥५०॥
गोमूत्रं यावकाहारं स्पृष्ट्वाकेदार(?)शुद्ध्यति ।
अविज्ञाततं(?) वालं संज्ञाभावात्कथञ्चन ॥५१॥
सज्ञाता ज्ञातवा पापी (?) ज्ञाततीर्थेन शुद्धति ।
प्रमादेऽवा प्रमादेवा वाले (?) निपातिते ॥५२॥
गङ्गा स्नानं च केदारं प्राजापत्यव्रतं चरेत् ।
विश्वनाथं च केदारं हरिं भागीरथीं तथा ॥५३॥
स्नात्वा वै संस्पृशेल्लिङ्गं वालघाती विशुद्ध्यति ।
अयोनौ च वियोनौ च पशुयोनौ तथैवच ॥५४॥
समुत्सृजंते ( ति ) ये शुक्रं ब्रह्महाफलमश्नुते ।
भार्यासखी कुमारी च कुजीवी(चा)न्त्यजा सुता ॥५४॥
स्वगोत्री (त्रा) स्वसुताश्चैव गत्वा स गुरुतल्पगः ।
पितृष्वसां मातुलानीं स्नुषां मातृस्नुषामपि ॥५६॥
मातुःपत्नीं स्वभगिनीमाचार्यतनयां तथा ।
आचार्यपत्नीं स्वसखीं गत्वा स गुरुतल्पगः ॥५७॥
छित्वालिङ्गं वधस्तस्य मुखेदद्याद्धुल्मुकंतथा ।
द्वादशाङ्गुलमात्रंतु लौहशंकुस्तथैवच ॥५८॥

मुखे तस्य प्रदातव्य जीव शुद्धो भवेत्तत ।
दिन(?) शास्त्रमते राजादेवो राज्ञश्च शासक ॥५९॥
मार्यागोधास्त्वनकुल मल्लूकश्च(मूषक च) तथैवच ।
हत्वा त्र्यहं पिबेत्क्षीरं पादकृच्छ्रं समाचरेत् ॥६०॥
उरगेश्चायसो दण्ड पचकत्रयमासक ।
काले घृतघटो देय उष्णगुं जाग्नेयुकम् ॥६१॥
एकवर्षे हते वत्से कृच्छ्रपादो निगीयते ।
अबुद्धि पूर्वं सस्पृष्ट्वा सूर्यरश्मिषु शुद्ध्यति ॥६२॥
मृतकञ्च श्वपाक च ऋतुस्या पतित तथा ।
मद्यपम्लेच्छचाण्डल स्पृष्ट्वा स्नान सहाम्बरै ॥६३॥

इति श्रीप्रश्नोत्तरयाज्ञवल्क्येधर्मशास्त्रे शुद्धि प्रकरणम्नाम
द्वादशोऽध्याय ।

---

# अथ त्रयोदशोऽध्यायः

## आशौचवर्णनम्

शुद्ध्यते द्विचतुर्मासै स्वल्प गर्भ (?) विनिसृतौ ।
अहोभिः शुद्ध्यते शेषैः (?) अर्थाभवति नाशने ॥१॥
दासी दासे तथा कन्या सूयते म्रियते यदि ।
त्रिरात्रंसूतकंतस्य भाषितं च प्रजापतिः ॥२॥
अप्रदत्ता भवेकाह प्रदत्तामुभयत्रयः ।
विवाहिता तु या कन्या सूतकं श्वसुरगृहे ॥३॥
शवसूति समुत्पन्ने सूतकं तु यदा भवेत् ।
शवेन शुद्ध्यते सूती न सूता शवशोधिनी ॥४॥
शवसूती समुत्पन्ने पुत्रजन्मयदा भवेत् ।
कुर्यात्तात्कालिकीशुद्धिरशुद्धि पुनरेवहि ॥५॥
आत्रिपक्षात्त्रिरात्रं स्यादाषण्मासाच्च पक्षिणी ।
अहः सम्वत्सरादर्वाक्पूर्णो दत्तोदकं शुचिः ॥६॥
पितरौ चेन्मृतौ स्यातां कथन्तु सूतकम्भवेत् ।
श्रुत्वातद्दिनमारभ्य दशाहं सूतकी भवेत् ॥७॥
आ (अ) दत्त जनात्सद्योआचूड़ान्नैषिकीस्मृतः ।
त्रिरात्रमव्रतादेशे दशरात्रमतःपरम् ॥८॥
द्वे सन्ध्ये सद्यमित्याहुर्द्वे दिने नैषिकीस्मृता ।
दिनद्वयं तु रात्र्यैका पक्षिणी तु विधीयते ॥ ९ ॥

दन्तजातानुजातौवाकृतचूडस्तु कर्म्मणि ।
त्रिरात्रं सूतकं तस्य भाषितं ब्रह्मणापुरा ॥१०॥
गर्भमध्ये विपत्ति स्याद्दशाहं सूतकम्भवेत् ।
जीवेजाते ततो मृत्यु सद्य शौचं विधीयते ॥११॥
द्विवर्षे निक्षिपेद्भूमौ त्रिवर्षे दाहमुच्यते ।
जीवजातोरग्निपाकर्म(?)समाचरेत् ॥१२॥
अन्तर्दशाहे स्याचेत्पुनर्मरणजन्मनि ।
तावत्स्यादशुचिर्विप्रो यावदस्य दिनान्दश ॥१३॥
अन्ते वै दिवसेतस्मादधिकं तु दिनद्वयम् ।
रात्रिशेषेण च द्वाभ्या प्रभाते त्रिभिरेव च ॥१४॥
दिवाकरोदयात्पूर्वं सूतकं मृतकम्भवेत् ।
एकविंशत्यहे यज्ञे विवाहे दशवासरे ॥१५॥
त्रिरात्रनतबन्ध्य (न्ध) स्याच्छ्राद्धं तदहरुच्यते ।
अभ्युगादिविवाहेषुयज्ञेषु वा वर्णं कृते ॥१६॥
श्राद्धैद्वन्त(?) समुत्पन्ने नाशौचं मृतसूतके ।
यज्ञदीक्षान्तविप्रस्य यज्ञस्थाना तु ऋत्विज ॥१७॥
यतीनां अध्ययनविदुषो नाक्षु(शु)द्धिब्रह्मचारिण ।
सत्र याची (गी) च यो नित्यं गरुडध्वजपूजक ॥१८॥
ब्रह्मचारी यतिश्चैव सर्वे ते त्यक्तसूतका ।
शुद्ध्यते प्रसव धेनुर्दिवसे दशमे सदा ॥१९॥
अजाविका(च)श्चमहिषी शुद्धयन्तेविंशतिभिर्दिने ।
एकाहाच्छुद्धते विप्रो योऽग्निर्वेदसमन्वित ॥२०॥

अहा (हः) त्केवलंवेदस्तु　अन्येषांदशभिर्दिनैः ।
दशाहं　गोत्र　शुद्धिःस्याद्विंशाहं पुत्रमात्रिकः ॥२१॥
त्रिंशाहं　कन्यकामाता　एकाहंचाप्यग्निवान् ।
स्नानसन्ध्यात्रयं हीनः सप्ताहे शूद्रवद्द्विजः ॥२२॥
संध्यास्नानत्रयं　तस्मात्सूतकेऽपिनसंत्यजेत् ।
आचतुर्थात्तु सम्पूर्णं पञ्चाहः पञ्चशाखिनाम् ॥२३॥
त्रिदिनं षष्ठशाखीनां सप्तशाखी दिनद्वयम् ।
अष्टमीचाहोरात्रमेकाहन्नवमी　तथा　॥२४॥
दशमी(म्यां) स्नानमात्रेण शाखयासूतकम्भवेत् ।
शाखामेकादशीति(ती)तन्निवृत्तिर्न च सूतकम् ॥२५॥
भोजना च(?)मनान्नं(मंत्र) परिग्रहपाकादिकम् ।
सङ्कर्पणं　तथागायांत्यजेत्सूतिकिनासह ।
यो न पूजयते नित्यं विष्णुवैश्वानरातिथिम् ॥२६॥
स्नानसन्ध्याविहीनाश्चा सदा ते सूतकान्विताः ।
प्रत्य(?) या मूर्खाः भि (भी) ष्टवर्णानिवाहका ॥२७॥
आचाररहिता ये च सदाते सूतकान्विताः ।
व्याधितस्यकदर्यस्य ऋणग्रस्तस्य चैव हि ॥२८॥
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ।
व्यसनासक्तचित्तस्य　पराधीनस्य नित्यशः ॥२९॥
श्रद्धात्यागविहीनस्य　भस्मान्तं सूतकम्भवेत् ।
सप्तरात्रं तु कापाये गोमूत्रे वा तथैव च ॥३०॥
त्रिफलात्र्यहसंयुक्ता गोचर्म्म नैव दुष्यति ।

प्र (?) क्षाग्रजम्बूचलभरधात्री
जटाधरो.(?) दुवकाकपाय ।
फलरं यस्मनि(?) मृचिकच-
रान्तिमेकाहनिचर्मशुद्धिः ॥३१॥
घृतेन दीपो दालव्यस्तिलतैलेन वा पुनः ।
आग्रचर्म मयं पात्रं सप्तधौतेन शुद्ध्यति ॥३२॥

इति श्रीब्रह्मोक्तयाज्ञवल्क्यधर्मशास्त्रे सूतकशुद्धिप्रकरणम
नाम त्रयोदशोऽध्याय ।
समाप्तश्चायं ब्रह्मोक्तयाज्ञवल्क्य धर्मशास्त्रम

॥ ॐ नमः शिवाय ॥

अथ

# * काश्यपस्मृतिः *

प्रायश्चित्तवर्णनम्

## अथ काश्यपीयान् गृहस्थधर्मान् व्याख्यास्यामः

आहिताग्निः स्वदारनिरतोऽत्याग्न्यग्निहोत्री स्नातामृतुकालगामी देवपितृमनुष्यभूतब्रह्मयज्ञानुसेवमानः एकद्वित्रिचतुर्णां ब्राह्मणान् कुर्वाणो व्रतनियमहोमजाप्यपरो मातृपितृभक्तो दारापत्यपोषकः शेषानुभोजी उपवासी त्रैवर्णिकमेदकसूतकान्नपरिहरमाणोऽलांगलवृत्तिः। तत्र च भूम्यपोढने वृक्षच्छेदने नास्यधर्मोभवति। कूपसेतुतडागविप्रदेवतायतनभेदने प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य चतस्रआहुतीर्जुहुयात्।

इदं विष्णुरिति प्रथमा, मानस्तोक इति द्वितीया, स्ववासा इति तृतीया, दंष्ट्राभ्यामिति चतुर्थीरत्यस्रपोढयेत् तस्यैव देवतायै पूर्णाहुतिं जुहुयात्।

अथ गोवलीवर्दमहिषधूर्याविकहिंसावाप्तौ प्रायश्चित्तकामकारतामित्येके। दोग्धृदमनपर्यस्तपाषघट्टनघंटाभरणभूषणयोजन तैलमंडौषधभेषज्यत्रितयमाणे व्यापन्नानामकामावाप्त्यै (प्तौ) प्रायश्चित्तं-

ब्राह्मणेभ्यो निवेद्य मशिरश्मश्रुवपनं कृत्वा प्राजापत्यं कृच्छ्रमाचरेत्। चीर्णान्ते गा दद्यात्। तिलधेनु जलधेनु चेतिकाश्यपः।

अथ मृगमहिषगंडुकवराहशरभऋक्षसिंहव्याघ्रमंडूकशूकर मत्स्यग्राहशिशुमारादीनां वधेप्यहोरात्रं। चीर्णान्ते गा दद्यात्। मेष स त्रिरात्रं चीर्णान्ते हिरण्यं दद्यात्।

अथ काक-बलाक-हंस-भारस-कारण्डव-चक्रवाक-गृध्रश्येन-राजकीट-टिट्टिभोलूक शुक सारिकामयूरकाक-मद्र कलविंक कपोत कपिंजलादीनां वधेप्यहोरात्रं। चीर्णान्ते तिलान्दद्यात्।

अथातः श्व-जम्बूक-विडाल-ऋषभरक्षुवासतोऽत्र शूद्रवधे त्रिरात्रं च प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य प्राजापत्यं कृच्छ्रं चरेत्। चीर्णान्ते सव्रीहीन् दद्यात्।

कृकलास सर्पनकुल विडालगोजावधे त्रिरात्रं चीर्णान्ते लोहं दद्यात्।

येषां व्यापादने प्रायश्चित्तमुक्तं तेषामेवोच्छिष्टभोजने प्राणायामशतंकृत्वा घृतं प्राश्य शुद्धं स्यात्।

जातमृतकसूतके ब्राह्मणो दशरात्रेण, क्षत्रिय पंचदशाहेन, वैश्योविंशतिरात्रेण, शूद्रो मासेन शुद्ध्यति। तच्चेदंत पुनरापतति तत्समेन शुध्यावस्वह। अत्राह्मणो न जायते, नाधीयीत, नाध्यापयेत्, न दद्यात न प्रतिगृह्णीयात्। अशुचिर्द्विपदे चतुष्पदे। नादितदह।

अथानशनमृतानामशनिहतानां वा अग्निप्रविष्टानां भृगुपतन-

अथ लशुन-पलांडुगृञ्जन-कुंभीकुक्कुटभक्षणे सुरासीधुमधुमद्यपाने अयाज्ययाजने पतितसावित्र्युपनयने तैः प्रायश्चित्तं ब्राह्मणेभ्यो निवेद्य यत्र ग्राममृगाणां पशूनां शब्दो न श्रूयते तस्मिन्प्रदेशे अग्निं प्रणिपरिसमुह्य पर्य्युपरिस्सर्य सशिखवपनं कृत्वा प्राक् प्रणीतेन विधिना पुनः संस्कारमर्हन्तीति।

अथ पंचमहापातकाः प्रवक्ष्यन्ते—

ब्राह्मणो नैव हन्तव्यः स्वस्वप्रक्षेपया द्विजैः।
सुवर्णहरणं चैव कर्तव्यं न कथंचन ॥ १ ॥
गुरुपत्नीं न गच्छेत संस्पर्शश्च न तैश्चरेत्।
महापातकसंज्ञेया निर्दिष्टानां मनीषिभिः ॥ २ ॥
वत्सरत्रितयं कुर्यात् नरः कृच्छ्रं विशुद्धये।
आत्मतुल्यसुवर्णं च दद्याद्वाविप्रतुष्टिकृत् ॥ ३ ॥

आत्रेयीगर्भं राजन्यवैश्यौ यज्ञगतौ हत्वा एतदेवकुर्यात्।

अथाकालि(क)व्याख्यास्यन्नाह—

अविनिरटकविद्य तवज्रनिर्घातप्रपतने भूमिचलने चैवाथनिम्नोत्तरे चैव प्रायश्चित्तं ब्राह्मणेभ्योनिवेद्य समीमयीनां समिध मधुदधिघृताक्तानामष्टसाहस्रं जुहुयात्। शन्नोदेवीति काश्यपः।

यत्र वेश्मनि उल्कोनिपतति। गृहं गोधाकपोतः प्रविशति। कृष्टः शकुनिः श्येनो वा रथभुज्ये(ध्वजे)वानिपतति। वल्मीक दीपिकागृहे पुरो ददति। शृगापुरोहणे कपाटघंटापुरोहणे चैव प्रायश्चित्तं

ब्राह्मणेभ्यो निवेद्य शमीमयीनां समिधद्‌धीमघृताक्तानामष्ट-सहस्रं जुहुयात्, वास्तोमते इति काश्यप ।

## अथ नैमित्तिकानि व्याख्यास्यामः—

क्षीरभाण्डभेदने मथने मनने पुरोहल्लांगल गलचक्रकूपपतने रथविपर्यासने अश्व(अस्त्र)भञ्जने रजस्वला-शवस्पर्शने आदित्यास्तमने सदुःस्वप्नदर्शने वर्णवैरापत्तिपुरोहणं यू(यू)पस्पर्शने मृतकसूतक भोजने चैव ब्राह्मणेभ्यो निवेद्य सचैल कृत्वा स्वप्नतिरयं जपेदिति काश्यप ।

## अथातः पात्राणां शौचविधिं व्याख्यास्यामः—

पर्ण्वने(?)न दारपत्रे भस्मनाकांस्य शौयुतास्रायसानां सिकताभिः शौचं । दन्तशस्थमणिरानतमीरयाणां घर्षणं । मृण्मयानां पुनर्दहनं । धान्यवाससां बहूनां प्रोक्षणं काष्ठ रज्जुत्वक्चर्म चीर वेणु विदलपत्रपर्णानां चलरक्षौचम् ।

## अथ पूर्वं पापकर्मणां चिह्नं व्याख्यास्यामः—

अगम्यागामी कुक्ष्मर्मा यस्माद्प्रायश्चित्त वेदात्मदिशुद्धये । एतान् श्राद्धे परिवर्जयेत् ये चान्ये पङ्क्तिदूषका । क्षुद्घटा वा घटानग्न प्रव्रजितरगारतानिदवल्कनक्षत्रजीवकग्रामयाचकपर्य्याहित पय्याधारकविविदकपौनर्भवानाश्नति । अदत्तार्द्रके नाश्नति । भार्य्याजितस्य नगरग्रामयाजकस्य अविव्रस्तघातो व्यंगोनक्षत्र सूचका ।

वर्जनीयाद्विजाह्येते श्राद्धकर्मसु नित्यशः।
दाराधीनाः क्रियाः सर्वा दाराः स्वर्गस्य साधनं ॥ ४ ॥

इत्येतत्ब्रह्मणाप्रोक्तं काश्यपस्यानुशासनम्।
सप्त पौनर्भवा कन्या वर्जनीया कुलाधमाः ॥ ५ ॥

वाचा दत्ता मनोदत्ता कृतमंगलकौतुका।
उदकस्पर्शका या च या च पाणिग्रहीतिका ॥ ६ ॥

अग्न्युपायं गता या च पुनर्वाह्यस्य वादिका।
इत्येताः कश्यपप्रोक्ता दहेयुः कुलमग्निवत् ॥ ७ ॥

प्ररोहत्यग्निमादाय पादपानां कुलंमहत्।
न हि पुनर्भवादीनां कुलं तस्य प्ररोहति ॥ ८ ॥

पिता वा यदि वा भ्राता माता वा यदिवेतरः।
नरश्च कृतपापानां गतिं यां याति तां श्रृणु ॥ ६ ॥

अनिवर्ती यथा श्येनो गच्छत्येव यमालयं।
एवं च नरकं याति कन्या अमृतकारका ॥१०॥

पुनः सम्पद्यते नारी गतमात्मानमात्मनि।
अस्थिमात्रं त्वचं भित्वा शुक्रं तेजोवलं तथा ॥११॥

शुद्धिं न ये प्रयच्छंति दुहितरं लोभमोहिताः।
तेषां तु नरके घोरे याति वै सप्तमं कुलम् ॥१२॥

गमनागमनायोगात् एवं शुक्रे विधीयते।
एवं ज्ञात्वा युक्तकन्यां विंदेत स तत्कुलात् ॥१३॥

